एकावसायसमनन्तरजातमन्य-
विज्ञानमन्वयविमर्षमुपादधाति ।
एवं तदेकविरहानुभवोद्भवान्य-
व्यावृत्तधीः प्रथयति व्यतिरेकबुद्धिं ॥

एवं सति गृहीतानुसन्धायके एवायं विकल्पः। उपादानोपादेयभूतक्रमिप्रत्यक्ष[1]द्वयगृहीतानुसन्धानात्। यदाहालङ्कारः।

यदि नामैकमध्यक्षं न पूर्व्वापरवित्तिमत्[2] ।
अध्यक्षद्वयसद्भावे प्राक्परावेदनं कथमिति ।

नापि द्वितीयो[3]ऽसिद्धप्रभेदः। सामर्थ्यं हि सत्त्वमिति सौगतानां स्थितिरेषा। न चैतत् प्रसाधनार्थमस्माकमिदानीमेव प्रारम्भः; किन्तु यत्र प्रमाणप्रतीते वीजादौ वस्तुभूते धर्म्मिणि प्रमाणप्रतीतं सामर्थ्यं तत्र क्षणभङ्ग[4]साधनाय। ततश्चाङ्कुरादीनां कार्य्यादर्शनात् आहत्य-सामर्थ्यसन्देहेऽपि पटुप्रत्यक्षप्रसिद्धं सत्त्वमात्रत्वमवधार्य्यमेव। अन्यथा न क्वचिदपि वस्तुमात्रस्यापि प्रतिपत्तिः स्यात्। तस्माच्छास्त्रीयसत्त्वलक्षणसन्देहेऽपि पटु-प्रत्यक्षबलावलम्बितवस्तुभावे अङ्कुरादौ कार्य्यत्व-

१ A °प्रत्यय° ।
२ A °रजितत् ।
३ A °सिद्धि° ।
४ A °प्रसाधनाय ।

मुपलभ्यमानं क्षेत्रादेः सामर्थ्यमुपस्थापयतीति नासिद्धिदोषावकाशः।

नापि क्षणिकत्वे[1] सामर्थ्यक्षतिः, यतो विरुद्धता स्यात्, क्षणिकत्वनियतप्रागभावित्वलक्षणकारणत्वयोर्वि[७]-रोधाभावात्, क्षणमात्रस्थायिन्यपि सामर्थ्यसम्भवादिति नादिमो विरोधः। नापि द्वितीयो विरोधप्रभेदः। अवस्तुनो वस्तुनो वा स्वाकारस्य ग्राह्यत्वेऽपि, अध्यवसेयवस्त्वपेक्षयैव सर्व्वत्र प्रामाण्यप्रतिपादनात् वस्तुस्वभावस्यैव क्षणिकत्वसिद्धिरिति क्व विरोधः।

यच्च गृह्यते यच्चाध्यवसीयते ते द्वे अपि अन्यनिवृत्तौ न वस्तुनी स्वलक्षणावगाहित्वे अभिलापसंसर्गानुपपत्तेरिति चेत्। न। अध्यवसायस्वरूपापरिज्ञानात् अगृहीतेऽपि वस्तुनि मानस्यादिप्रवृत्तिकारकत्वं विकल्पस्याध्यवसायित्वं, अप्रतिभासेऽपि प्रवृत्तिविषयीकृतत्वमध्यवसेयत्वम्। एतच्चाध्यवसेयत्वं स्वलक्षणस्यैव युज्यते, नान्यस्य। अर्थक्रियार्थित्वात् अर्थिप्रवृत्तेः। एवञ्चाध्यवसाये स्वलक्षणस्यास्फुरणमेव। न च तस्यास्फुरणेऽपि. सर्व्वत्राविशेषेण प्रवृत्त्याक्षेपप्रसङ्गः, प्रतिनियतसामग्रीप्रसूतात्, प्रतिनियतस्वाकारात्, प्रति

---

[1] A. क्षणिक॰।

नियतशक्तियोगात्, प्रतिनियत एवातद्रूपपरावृत्ते[1] अप्रतीतेऽपि प्रवृत्तिसामर्थ्यदर्शनात्। यथा सर्व्वस्यासत्त्वेऽपि बीजादङ्कुरस्यैवोत्पत्तिः दृष्टस्य नियतहेतुफलभावस्य प्रतिक्षेप्तुमशक्यत्वात्। परं बाध्येनार्थेन सति प्रतिबन्धे प्रामाण्यमन्यथात्वप्रामाण्यमिति विशेषः।

तथा तृतीयोऽपि पक्षः प्रयासफलः। नानाकालस्यैकस्य वस्तुनो वस्तुतोऽसम्भवेप्यतद्रूपपरावृत्तयोरेव साध्यसाधनयोः प्रत्यक्षेण व्याप्तिग्रहणात्। द्विविधो हि प्रत्यक्षस्य विषयो ग्राह्योऽध्यवसेयश्च सकलातद्रूपपरावृत्तं वस्तुमात्रं साक्षादस्फुरणात् प्रत्यक्षस्य ग्राह्यो विषयो मा भूत्। तदेकदेशग्रहणे तु तन्मात्रयोर्व्याप्तिनिश्चायकविकल्पजननादध्यवसेयो विषयो भवत्येव। क्षणग्रहणे सन्ताननिश्चयवत्। रूपमात्रग्रहणे घटनिश्चयवच्च। अन्यथा सर्व्वानुमानोच्छेदप्रसङ्गात्। तथा हि व्याप्तिग्रहः सामान्ययोः, विशेषयोः, सामान्यविशिष्टविशेषयो विशेषविशिष्टसामान्ययो[2]र्वेति विकल्पाः। नाद्यो विकल्पः सामान्यस्य बाध्यत्वात्। अबाध्यत्वेऽप्यदृश्यत्वात्। दृश्यत्वेऽपि पुरुषार्थानुपयोगितया तस्यानुमेयत्वायोगात्।

१ A एव लक्षणे।

२ A सामान्यविशिष्टलक्षणयोः लक्षणविशिष्टसामान्ययोः।

नाप्यनुमितात्[1] सामान्यात् विशेषानुमानम्, सामान्यसर्व्वविशेषयोर्वक्ष्यमाणन्यायेन प्रतिबन्धप्रतिपत्तेरयोगात्। नापि द्वितीयो विशेषस्याननुगामित्वात्। अन्तिमे तु विकल्पद्वये सामान्याधारतया दृष्ट एव विशेषः सामान्यस्य विशेष्यो विशेषणं वा कर्त्तव्यः। अदृष्ट एव वा देशकालान्तरवर्त्ती। यद्वा दृष्टादृष्टात्मको देशकालान्तरवर्त्ती अतद्रूपपरावृत्तः सर्व्वो विशेषः। न प्रथमः पक्षोऽननुगामित्वात्; नापि द्वितीयः, अदृष्टत्वात्। न च तृतीयः, प्रस्तुतैकविशेषदर्शनेऽपि देशका-[८]लान्तरवर्त्तिनामदर्शनात्।

अथ तेषां सर्व्वेषामेव विशेषाणां सदृशत्वात्। सदृशसामग्रीप्रसूतत्वात् सदृशकार्य्यकारित्वादिति प्रत्यासत्त्या, एकविशेषग्राहकं प्रत्यक्षमतद्रूपपरावृत्तमात्रे निश्चयं जनयदतद्रूपपरावृत्तविशेषमात्रस्य व्यवस्थापकम्। यथैकसामग्रीप्रतिबद्धरूपमात्रग्राहकं प्रत्यक्षं घटे निश्चयं जनयद्घटग्राहकं व्यवस्थाप्यते। अन्यथा घटोऽपि घटसन्तानोऽपि प्रत्यक्षतो न सिध्येत् सर्व्वात्मना ग्रहणाभावात्। तद्देकदेशग्रहणान्वतद्रूपपरावृत्तेऽप्यविशिष्टम्। यद्येवमनेनैव क्रमेण सर्व्वस्य विशेषस्य विशेषणविशेष्य-

1 A has not the sixth leaf.

भाववत् व्याप्तिप्रतिपत्तिरप्यस्तु। तत् किमर्थं नानाकाल-मेकक्षणिकमभ्युपगन्तव्यं येन क्षणिकत्वे साधनस्य विरुद्धत्वं स्यात् इति न कश्चिद्विरोधप्रभेदप्रसङ्गः।

न चायमनैकान्तिकोऽपि हेतुः। पूर्व्वोक्तक्रमेण साधर्म्म्यदृष्टान्ते प्रसङ्गविपर्य्ययहेतुभ्यामन्वयरूपव्याप्तेः प्रसाधनात्। ननु यदि प्रसङ्गविपर्य्ययहेतुद्वयबलतो घटे दृष्टान्ते क्षणभङ्गः सिध्येत्तदा सत्त्वस्य नियमेन क्षणिकत्वेन व्याप्तिसिद्धेरनैकान्तिकत्वं न स्यादिति युक्तम्। केवल-मिदमेवासम्भवि। तथाहि शक्तोऽपि घटः क्रमिसह-कार्य्यपेक्षया क्रमिकार्य्यं करिष्यति।

न चैतद् वक्तव्यं समर्थो ऽर्थः स्वरूपेण करोति। स्वरूपञ्च सर्व्वदास्तीत्यनुपकारिणि सहकारिण्यपेक्षा न युज्यत इति, सत्यपि स्वरूपेण कारकत्वे सामर्थ्या-भावात्कथं करोति, सहकारिसाकल्यं हि सामर्थ्यं तद्वैकल्यञ्चासामर्थ्यं। न च तयोराविर्भावतिरोभावाभ्यां तद्वतः काचित् क्षतिः। तस्य ताभ्यामन्यत्वात्। तस्मादर्थः समर्थोऽपि स्यात् न च करोतीति सन्दिग्ध-व्यतिरेकः प्रसङ्गहेतुः।

अत्रोच्यते। भवतु तावत् सहकारिसाकल्यमेव सामर्थ्यं। तथापि सोऽपि तावद्भावः स्वरूपेण कारकः।

तस्य च यादृशश्चरमक्षणे ऽक्षेपक्रियाधर्म्मा स्वभावः तादृश एव चेत् प्रथमक्षणे तदा तदापि प्रसह्य कुर्व्वाणो ब्रह्मणाप्यनिवार्य्यः। न च सोऽप्यक्षेपक्रियाधर्म्मा स्वभावः साकल्ये सति जातो भावाद्भिन्न एवाभिधातुं शक्यः। भावस्याकर्तृत्वप्रसङ्गात्। एवं यावद्यावत् धर्मान्तरपरिकल्पस्तावत्तावदुदासीनो भावः। तस्माद्यद्रूपमादाय स्वरूपेणापि जनयतीत्युच्यते; तस्य प्रागपि भावे कथमजनिः कदाचित्। अक्षेपक्रियाप्रत्यनीकस्वभावस्य प्राच्यस्य पश्चादनुवृत्तौ कथं कदाचिदपि कार्य्यसम्भवः। ननु यदि स एवैकः कर्त्ता स्यात् युक्तमेतत्। किन्तु सामग्री जनिका ततः सहकार्य्यन्तरविरहवेलायां बलीयसोऽपि न कार्य्यप्रसव इति किमत्र विरुद्धं। न हि भावः स्वरूपे[ई]ण करोतीति स्वरूपेणैव करोति। सहकारिसहितादेव ततः कार्य्योत्पत्तिदर्शनात्। तस्माद्यात्रिवत् कार्य्यकारणभावोऽपि, एकत्रान्ययोगव्यवच्छेदेन अन्यत्रायोगव्यवच्छेदेन नावबोद्धव्यः, तथैव लौकिकपरीक्षकाणां सम्प्रतिपत्तेरिति।

अत्रोच्यते। यदा मिलिताः सन्तः कार्य्यं कुर्व्वते तदैकार्थकरणलक्षणं सहकारित्वमेषामस्तु को निषेद्धा? मिलितैरेव तु तत्कार्य्यं कर्त्तव्यमिति कुतो लभ्यते?

पूर्व्वापरयोरेकस्वभावत्वाद्भावस्य । सर्व्वदा जननाजननयोरन्यतरनियत[१]प्रसङ्गस्य दुर्व्वारत्वात् । तस्मात् सामग्री जनिका नैकं जनकमिति स्थिरवादिनां मनोरथस्याप्यविषयः । दृश्यते तावदेवमिति चेत् । दृश्यतां किन्तु पूर्व्वस्थितादेव सामग्रीमध्यप्रविष्टाद्भावात् कार्य्योत्पत्तिरन्यस्मादेव वा विशिष्टाद्भावादुत्पन्नादिति विवादपदम् । तत्र प्रागपि सम्भवे सर्व्वदैव कार्य्योत्पत्ति र्न वा कदाचिदपीति विरोधमसमाधाय चक्षुषी निमील्य तत एव कार्य्योत्पत्तिदर्शनादिति साध्यानुवाद[२]मात्रप्रवृत्तः कृपामर्हतीति । न च प्रत्यभिज्ञादि[३]बलादेकत्वसिद्धिः तत् पौरुषस्य लूनपुनर्जातकेशन[४]खादावप्युपलम्भतो निर्द्दलनात्, लक्षणभेदस्य च दर्शयितुमशक्यत्वात् । स्थिरसिद्धिदूषणे चास्माभिः प्रपञ्चतो निरस्तत्वात् । तस्मात् साक्षात् कार्य्यकारणभावापेक्षया उभयत्राप्यन्ययोगव्यवच्छेदः । व्याप्तौ तु साक्षात्परम्परया कारणमात्रापेक्षया कारणे व्यापकेऽयोगव्यवच्छेदः । कार्य्ये व्याप्ये[५]ऽन्ययोगव्यवच्छेदः । तथा[६] तदतत्स्वभावे व्यापकेऽयोगव्यवच्छेदः । तत्स्वभावे च

१ A °नियम° । २ A omits °मात्र° । ३ A omits °आदि° ।
४ A omits °नख° । ५ A omits कार्ये । ६ A तदा ।

व्याप्येऽन्ययोगव्यवच्छेदो विकल्पारूढरूपापेक्षया व्याप्तौ द्विविधमवधारणम् । ननु यदि पूर्व्वापरकालयोरेकस्वभावो भावः सर्व्वदाजनकत्वेनाजनकत्वेन वा व्याप्त उपलब्धः स्यात्तदायं प्रसङ्गः सङ्गच्छते । न[1] क्षणभङ्गवादिना पूर्व्वापरकालयोरेकः कश्चिदुपलब्ध इति चेत् । तदेतदतिग्राम्यं । तथाहि पूर्व्वापरकालयोरेकस्वभावत्वे सतीत्यस्यायमर्थः । परकालभावी जनको यः स्वभावो भावस्य स एव यदि पूर्व्वकालभावी । पूर्व्वकालभावी वा योऽजनकः स्वभावः स एव यदि परकालभावी, तदोपलब्धमेव जननमजननम्वा स्यात्, तथा च सति सिद्धयोरेव स्वभावयोरेकत्वारोपे सिद्धमेव जननमजननम्वाऽसज्यत इति ।

ननु कार्य्यमेव[2] सहकारिणमपेक्षते । न तु कार्य्योत्पत्तिहेतुः । यस्मात् द्विविधं सामर्थ्यं निजमागन्तुकञ्च सहकार्य्यन्तरं ततोऽक्षणिकस्यापि क्रमवत् सहकारिनानात्वादपि क्रमवत् कार्य्यनानात्वोपपत्तेरशक्यं भावानां प्रतिक्षणमन्यान्य[१०]त्वमुपपादयितुमिति चेत् । उच्यते[3] । भवतु तावन्निजागन्तुकभेदेन द्विविधं सामर्थ्यं । तथापि यत् प्रातिस्विकं वस्तुस्वलक्षणं अर्थं[4]-

१ A adds च ।
२ A adds चि ।
३ A omits उच्यते ।
४ B has समः for अर्थं ।

क्रियाधर्म्मकमवश्यमभ्युपगन्तव्यं तत् किं प्रागपि पश्चादेव वेति विकल्प्य यद्दूषणमुदीरितं[१] । तच्च किमुक्तमनेनेति न प्रतीमः । यत्तु कार्य्यैरेव सहकारिणोऽपेक्ष्यन्त इत्युपस्कृतं तदपि निरुपयोगं । यदि हि कार्य्यमेव स्वजन्मनि स्वतन्त्रं स्यादयुक्तमेतत् । केवलमेवं सति सहकारिसाकल्य[२]सामर्थ्यकल्पनमफलं । स्वातन्त्र्यादेव हि कार्य्यं कादाचित्कं भविष्यति । तथा च सति सन्तो हेतवः सर्व्वथाऽसमर्थाः । असदेतत्[३] कार्य्यं स्वतन्त्रमिति विमुग्धा बुद्धिः । अथ कार्य्यस्यैवायमपराधो यदिदं समर्थे कारणे सत्यपि कदाचिन्नोपपद्यत इति चेत् । न । तत्तर्हि तत् कार्य्यं स्वातन्त्र्यात् । यद्भाष्यं ।

सर्व्वावस्थासमानेऽपि कारणे यद्यकार्य्यता ।
स्वतन्त्रं कार्य्यमेवं स्यान्नतत्कार्य्यन्तथा सति ॥

अथ न तद्भावे भवतीति तत्कार्य्यमुच्यते, किन्तु तदभावेन भवत्येवेति व्यतिरेकप्राधान्यादिति चेत् । न । यदि हि स्वयमभवन् भावयेदेव हेतुः स्वकार्य्यं तदा तदभावप्रयुक्तोऽस्याभाव इति प्रतीतिः स्यात्[४] । नो चेद् यथा कारणे सत्यपि कार्य्यस्वातन्त्र्यान्न भवति ।

१ A उदीरित० ।
२ A omits साकल्य० ।
३ A असत् ।
४ A omits स्यात् ।

तथा तदभावेऽपि स्वातन्त्र्यादेव न भूतमिति शङ्का केन निवार्य्येत । यद्भाष्यं ।

तद्भावेऽपि न भावश्चेदभावेऽभाविता कुतः ।
तदभावप्रयुक्तोस्य सोऽभाव इति तत् कुतः ॥

तस्माद् यथैव तद्भावे नियमेन न भवति । तथैव तद्भावे नियमेन भवेदेव । अभवच्च न तत्कारणता-मात्मनः क्षमते । यच्चोक्तं, प्रथमकार्य्योत्पादनकाले ह्युत्तरकार्य्योत्पादनस्वभावः । अतः प्रथमकाल एवा-शेषाणि कार्य्याणि कुर्य्यादिति । तदिदं माता मे वन्ध्ये-त्यादिवत् स्ववचननिरोधादयुक्तं, यो ह्युत्तरकार्य्यजनन-स्वभावः स कथमादौ कार्य्यं[1] कुर्य्यात् । न तर्हि तत्कार्य्यकरणस्वभावः न हि नीलोत्पादनस्वभावः पीतादिकमपि करोतीति ।

अत्रोच्यते । स्थिरस्वभावत्वे हि भावस्य उत्तर-कालमेवेदं कार्य्यं न पूर्व्वकालमिति कुत एतत् । तदभावाच्च कारणमपि उत्तरकार्य्यकरणस्वभावमित्यपि कुतः । किं कुर्म्मः उत्तरकालमेव तस्य जन्मेति चेत् ; अस्तु स्थिरत्वे तदनुपपद्यमानमस्थिरतामादिशतु ; स्थिरत्वेप्येष एव[2] स्वभावस्तस्य यदुत्तरक्षण एव करो-

---

१ A omits कार्य्यं ।    २ A omits एव ।

तीति चेत्। उतेदानीं प्रमाणप्रत्याशा। धूमाद'ग्नि-रित्यत्रापि स्वभाव एवास्य यदिदानीमत्र निरग्निरपि धूम इति वक्तुं शक्यत्वात्। तस्मात् प्रमाणसिद्धे स्वभावावलम्बनं, न तु स्वभावावलम्बनेन प्रमाणव्यालोपः। तस्माद् यदि कारणस्यो[११]त्तरकार्य्यकारकत्वमभ्युपगम्य कार्य्यस्य प्रथमक्षणभावित्वमासज्यते, स्यात् स्ववचनविरोधः। यदा तु कारणस्य स्थिरत्वे कार्य्यस्योत्तरकालत्वमेवासङ्गतम्। अतः कारणस्याप्युत्तरकार्य्यजनकत्वं वस्तुतोऽसम्भवि तदा प्रसङ्गसाधनमिदं। जननव्यवहारगोचरत्वं हि जननेन व्याप्तमिति प्रसाधितं। उत्तरकार्य्यजननव्यवहारगोचरत्वञ्च त्वदभ्युपगमात् प्रथमकार्य्यकरणकाल एव घटे धर्म्मिणि सिद्धं। अतस्तन्मात्रानुबन्धिन उत्तराभिमतस्य कार्य्यस्य प्रथमे क्षणेऽसम्भवादेव प्रसङ्गः क्रियते। न हि नीलकारकेऽपि पीतकारकत्वारोपे पीतसम्भवप्रसङ्गः स्ववचनविरोधो[२]-नाम। तदेवं शक्तः सहकार्य्यनपेक्षितत्वात् जननेन व्याप्तः। अजनयंश्च शक्ताशक्तत्वविरुद्धधर्म्माध्यासाद्भिन्न एव। ननु भवतु प्रसङ्गविपर्य्ययबलादेककार्य्यं प्रतिशक्ताशक्तत्वलक्षणविरुद्धधर्म्माध्यासः। तथापि न ततो

---

१ A adds चच। २ A °विरुद्धो।

भेदः सिध्यति ; तथाहि बीजमङ्कुरादिकं कुर्व्वद् यदि येनैव स्वभावेनाङ्कुरं करोति तेनैव क्षित्यादिकन्तदा-क्षित्यादीनामप्यङ्कुरस्वाभाव्यापत्तिः । नानास्वभावत्वेन तु[1] कारकत्वे स्वभावानामन्योन्याभावाव्यभिचारित्वा-देकत्र भावाभावौ परस्परविरुद्धौ स्यातामित्येकमपि बीजं भिद्येत । एवं प्रदीपोऽपि तैलक्षयवर्त्तिदाहादिकं ; तथा पूर्व्वरूपमप्युत्तररूपरसगन्धादिकमनेकैः स्वभावैः परिकरितं करोति । तेषाञ्च स्वभावानामन्योन्या-भावाव्यभिचाराद्विरुद्धानां योगे प्रदीपादिकं भिद्येत । न च भिद्यते । तन्न ! विरुद्धधर्म्माध्यासो भेदकः, तथा-बीजस्याङ्कुरं प्रति कारकत्वं गर्द्दभादिकं प्रत्यकारकत्व-मिति कारकत्वाकारकत्वे अपि विरुद्धौ धर्म्मौ । न च तद्योगेऽपि बीजभेदः । तदेवमेकत्र बीजे प्रदीपे रूपे च विपक्षे परिदृश्यमानः शक्ताशक्तत्वादिर्विरुद्धधर्म्माध्यासो न घटादेर्भेदक इति ।

अत्र ब्रूमः । भवतु तावद्बीजादीनामनेककार्य्य-कारित्वाद्धर्म्मभूतानेकस्वभावभेदस्तथापि कः प्रस्तावो विरुद्धधर्म्माध्यासस्य । स्वभावानां ह्यन्योन्याभावा-व्यभिचारे भेदः प्राप्तावसरो न विरोधः । विरोधस्तु

१ A ०स्वभावेन and omits तु

यद्विधाने यन्निषेधो यन्निषेधे यद्विधानं तयोरेकच धर्म्मिणि परस्परपरिहारस्थिततया स्यात्। तदचैकः स्वभावः स्वाभावेन विरुद्धो युक्तो भावाभाववत्। न तु स्वभावान्तरेण। घटत्ववस्तुत्ववत्। एवमङ्कुरादिकारित्वं तदकारित्वेन विरुद्धं न पुनर्वस्त्वन्तरकारित्वेन[१]। प्रत्यक्षव्यापारश्चाच यथा नानाधर्म्मैरध्यासितं भावमभिन्नं व्यवस्थापयति। तथा तत्कार्य्यकारिणं कार्य्यान्तराकारिणञ्च। तद्यदि प्रतियोगित्वाभावादन्योन्याभावाव्यभिचारि [१२] णावपि स्वभावावविरुद्धौ तत्कारकत्वान्याकारकत्वे वा विषयभेदादविरुद्धे, तत् किमायातमेककार्य्यम्प्रति शक्ताशक्तत्वयोः परस्परप्रतियोगिनोर्विरुद्धयोर्धर्म्मयोः। एतयोरपि पुनरविरोधे विरोधो नाम दत्तजलाञ्जलिः। भवतु तर्ह्येककार्य्यापेक्षयैव सामर्थ्यासामर्थ्ययोर्विरोधः। केवलं यथा तदेव कार्य्यं प्रति क्वचिद्देशे शक्तिर्देशान्तरे चाशक्तिरिति देशभेदादविरुद्धे शक्त्यशक्ती तथैकचैव कार्य्यं कालभेदादप्य[२]विरुद्धे। यथापूर्व्वं[३]निःक्रियः स्फटिकः स एव पश्चात् सक्रिय इति चेत्।

---

१ B वस्त्वन्तराकारित्वेन।

२ A omits अपि।　　३ B पूर्व्ववत्।

उच्यते। न हि वयं परिभाषामात्रादेकत्र कार्य्ये देशभेदादविरुद्धे शक्त्यशक्ती ब्रूमः। किन्तु विरोधाभावात्। तद्देशकार्य्यकारित्वं हि तद्देशकार्य्याकारित्वेन विरुद्धं। न पुनर्देशान्तरे तत्कार्य्याकारित्वेनान्यकार्य्यकारित्वेन वा। यद्येवन्तत्कालकार्य्यकारित्वं तत्कालकार्य्याकारित्वेन विरुद्धं। न पुनः कालान्तरे तत्कार्य्याकारित्वेनान्यकार्य्यकारित्वेन वा। तत्कथं कालभेदेऽपि विरोध इति चेत्। उच्यते। द्वयोर्हि धर्म्मयोरेकत्रधर्म्मिण्यनवस्थितिनियमः परस्परपरिहारस्थितिलक्षणो विरोधः। स च साक्षात्परस्परप्रत्यनीकतया भावाभाववद्वा भवेत्। एकस्य वा[2] नियमेन प्रमाणान्तरेण बाधनान्नित्यत्वसत्त्ववद्वा भवेदिति न कश्चिदर्थभेदः। तदत्रैकधर्म्मिणि तत् कालकार्य्यकारित्वाधारे कालान्तरे तत्कार्य्याकारित्वस्यान्यकार्य्यकारित्वस्य वा नियमेन प्रमाणान्तरेण बाधनाद्विरोधः। तथा हि यत्रैव धर्म्मिणि तत्कालकार्य्यकारित्वमुपलब्धन्न तत्रैव कालान्तरे तत् कार्य्याकारित्वमन्यकार्य्यकारित्वं वा ब्रह्मणाप्युपसंहर्त्तुं शक्यते, येनानयोरविरोधः स्यात्। क्षणान्तरे कथित-

१ A omits 'कार्य्य°'। २ A omits वा।

प्रसङ्गविपर्य्ययहेतुभ्यामवश्यम्भावेन धर्म्मिभेदप्रसाधनात्। न च प्रत्यभिज्ञानादेकत्वसिद्धिः। तत् पौरुषस्य निर्म्मूलितत्वात्। अत एव वज्रोऽपि पक्षकुक्षौ निक्षिप्तः कथमसौ स्फटिको वराकः कालभेदेनाभेदसाधनाय दृष्टान्तीभवितुमर्हति। न चैवं समानकालकार्य्याणां देशभेदेऽपि धर्म्मिभेदो युक्तो भेदसाधकप्रमाणाभावादिन्द्रियप्रत्यक्षेण निरस्तविभ्रमाशङ्केनाभेदप्रसाधनाच्च। इति न कालभेदेऽपि शक्त्यशक्त्योर्विरोधः स्वसमयमात्रादपहस्तयितुं शक्यः। समयप्रमाणयोरप्रवृत्तेरिति।

तस्मात् सर्व्वत्र विरुद्धधर्म्माध्याससिद्धिरेव भेदसिद्धिः। विप्रतिपन्नं प्रति तु विरुद्धधर्म्माध्यासाद्भेदव्यवहारः साध्यते। ननु तथापि सत्त्वमिदमनैकान्तिकमेवासाधारणत्वात् [१३] सन्दिग्धव्यतिरेकत्वाद्वा। यथा हीदं क्रमाक्रमनिवृत्तौ अक्षणिकान्निवृत्तं, तथा सापेक्षत्वानापेक्षत्वयोरेकत्वानेकत्वयोरपि व्यापकयोर्निवृत्तौ क्षणिकादपि। तथा ह्युपसर्पणप्रत्ययेन देवदत्तकरपल्लवादिना सहचरो वीजक्षणः पूर्व्वस्मादेव पुञ्जात् समर्थोजातोऽनपेक्ष आद्यातिशयस्य जनक दृश्यते। तत्र च[1] समानकुशूलजन्मसु बहुषु वीजसन्तानेषु कस्मात्

---

१ A omits च।

किञ्चिदेव वीजं परम्परयाङ्कुरोत्पादानुगुणमुपजनयति वीजक्षणान्तरे वीजक्षणा भिन्नसन्तानान्तःपातिनः। नह्युपसर्पणप्रत्ययात् प्रागेव तेषां समानासमानसन्तानवर्त्तिनां वीजक्षणानां कश्चित् परम्परातिशयः। अथोपसर्पणात्[1] प्राङ्न तत् सन्तान[2]वर्त्तिनोऽपि जनयन्ति परम्परयाप्यङ्कुरोत्पादानुगुणं वीजक्षणं वीजमात्रजननात्तेषां। कस्यचिदेव वीजक्षणस्योपसर्पणप्रत्ययसहभुव आद्यातिशयोत्पादः। हन्त तर्हि यदभावे सत्युत्पन्नोपि न जनयेदेव। तथा[3] केवलानां व्यभिचारसम्भवादाद्यातिशयोत्पादमङ्कुरं वा प्रति क्षित्यादीनां परस्परापेक्षाणामेवोत्पादकत्वमकामकेनापि स्वीकर्त्तव्यं। अतो न तावदनपेक्षा क्षणिकस्य सम्भविनी। नाप्यपेक्षा युज्यते। समसमयक्षणयोः सव्येतरगोविषाणयोरिवोपकार्य्योपकारकभावायोगादिति नासिद्धः प्रथमो व्यापकाभावः। अपि चान्यो वीजक्षणोऽनपेक्षोऽङ्कुरादिकं कुर्व्वन् यदि येनैव रूपेणाङ्कुरं करोति तेनैव क्षित्यादिकं। तदा क्षित्यादीनामपि अङ्कुरस्वाभाव्यापत्तिरभिन्नकारणत्वादिति न तावदेकत्वसम्भवः।

१ A उपसर्पण प्रत्ययात्। २ A सन्तानानुवर्त्तिनः।
३ A तथा च।

ननु रूपान्तरेण करोति। तथा हि वीजस्याङ्कुरं प्रत्युपादानत्वं क्षित्यादिकं तु प्रति सहकारित्वं। यद्येवं सहकारित्वोपादानत्वे किमेकन्तत्वं नाना वा। एकञ्चेत कथं रूपान्तरेण जनकं। नानात्वे त्वनयोर्वीजाद्भेदोऽभेदो वा। भेदे कथं वीजस्य जनकत्वं ताभ्यामेवाङ्कुरादीनामुत्पत्तेः। अभेदे वा कथं वीजस्य न नानात्वं भिन्नतादात्म्यात्। एतयोर्वा एकत्वमेकतादात्म्यात्। यद्युच्येत। क्षित्यादौ जनयितव्ये तदुपादानम् पूर्व्वमेव क्षित्यादिवीजस्य रूपान्तरमिति। न तर्हि वीजन्तदनपेक्षं क्षित्यादीनां जनकं। तदनपेक्षत्वे तेषामङ्कुरोद्भेदानुपपत्तेः। न चानुपकारकाण्यपेक्षन्त इति त्वयैवोक्तं। न च क्षणस्योपकारसम्भवोऽन्यच जननात् तस्याभेद्यत्वादित्यनेकत्वमपि नास्तीति द्वितीयोऽपि व्यापकाभावो न सिद्धः। तस्मादसाधारणानैकान्तिकत्वं गन्धवत्त्ववदिति। यदि मन्येतानुपकारका अपि भवन्ति सहकारिणोऽपेक्षणीयाश्च कार्य्येणानुविहितभावाभावात् सहकरणाच्च। नन्वनेन क्रमेण[१४]क्षणिकोपि भावोऽनुपकारकानपि सहकारिणः क्रमवतः क्रमवत्कार्य्येणानुकृतान्वयव्यतिरेकानपेक्षिष्यते। करिष्यते च क्रमवत् सहकारिवशः क्रमेण कार्य्याणीति व्यापकानुपलब्धे-

रसिद्धेः । सन्दिग्धव्यतिरेकमनैकान्तिकं सत्त्वं क्षणिकत्वसिद्धाविति ॥

अत्र ब्रूमः । कीदृशं पुनरपेक्षार्थमादाय क्षणिके[१] सापेक्षानपेक्षत्वनिवृत्तिरुच्यते । किं सहकारिणमपेक्षत इति सहकारिणास्योपकारः कर्त्तव्यः ।

अथ पूर्व्वावस्थितस्यैव वीजादेः सहकारिणा सह सम्भूयकरणं । यद्वा पूर्व्वावस्थितस्येत्यनपेक्षमिलितावस्थस्य करणमात्रमपेक्षार्थः । अत्र प्रथमपक्षस्यासम्भवा[२]दनपेक्षैव क्षणिकस्य कथमुभयव्यावृत्तिः । यद्यनपेक्षः क्षणिकः, किमित्युपसर्पणप्रत्ययाभावेऽपि न करोति । करोत्येव यदि स्यात् । स्वयमसम्भवी तु कथं करोतु । अथ तद्वा तादृग्वा आसीदिति न कश्चिद्विशेषः । ततस्तादृक्स्वभावसम्भ[३]वेप्यकरणं सहकारिणि निरपेक्षतां न क्षमत इति चेत् । असम्बद्धमेतत्[४] । वर्णसंस्थानसाम्येप्यकर्त्तुस्तत्स्वभावताया विरहात् । स चाद्यातिशयजनकत्वलक्षणः स्वभावविशेषो न समानासमानसन्तानवर्त्तिषु वीजक्षणेषु सर्व्वेष्वेव[५] सम्भवी किन्तु केषुचिदेव •कर्म्मकरकर[६]पल्लवसहचरेषु । नन्वेकत्र क्षेत्रे

[१] A क्षणिकत्वे । [२] A असद्भावात् । [३] A omits °सम्भवे । [४] A असुबद्धमेतत् । [५] A omits सर्व्वेषु । [६] B omits °कर° ।

निष्पत्तिलवनादिपूर्व्वकमानीयैकत्र कुशूले क्षिप्तानि सर्व्वाण्येव वीजानि साधारणरूपाण्येव प्रतीयन्ते, तत् कुतस्त्योऽयमेक[1]वीजसम्भवो विशेषोन्येषा[2]मिति चेत्।

उच्यते। कारणं खलु सर्व्वत्र कार्य्ये द्विविधं। दृष्टमदृष्टञ्च सर्व्वास्तिकप्रसिद्धमेतत्। ततः प्रत्यक्षपरोक्षसहकारिप्रत्यय[3]साकल्यमसर्व्वविदा प्रत्यक्षतो न शक्यं प्रतिपत्तुं। ततो भवेदपि कारणसामग्रीशक्तिभेदात्तादृशः स्वभावभेदः केषाञ्चिदेव वीजक्षणानां येन तएव वीजक्षणा[4] आद्यातिशयमङ्कुरम्वा परम्परया जनयेयु र्नान्ये वीजक्षणाः। ननु येषूपसर्पणप्रत्ययसहचरेषु स्वकारणशक्तिभेदादाद्यातिशयजनकत्वलक्षणो विशेषः सम्भाव्यते, स तत्रावश्यमस्तीति कुतो लभ्यमिति चेत्। अङ्कुरोत्पादादनुमितादाद्यातिशयलक्षणात् कार्य्यादिति ब्रूमः। कारणानुपलब्धेस्तर्हि तदभाव एव भविष्यतीति चेत्। न। दृश्यादृश्यसमुदायस्य कारणस्यादर्शनेप्यभावसिद्धेः कारणानुपलब्धेः सन्दिग्धासिद्धत्वात्। तदयमर्थः॥ पाणिस्पर्शवतः क्षणस्य न भेदभिन्नान्यकालक्षणाद्भेदो वेति मतद्वये मितिबलं यस्यास्त्यसौ जित्वरः। तत्रैकस्य

---

१ A कतिपय०। २ A वीजक्षणानाम्।

३ A omits प्रत्यय०। ४ क्षणाः।

वलं निमित्तविरहः कार्य्याक्रमन्यस्य वा । सामग्री तु न सर्व्वथेक्षणसहा कार्य्यन्तु मानानुगममिति ॥

तदेवं नोपकारोऽपेक्षार्थ इत्यनपे[१५]क्ष्यैव क्षणिकस्य सहकारिषु नोभयव्यावृत्तिः । अथ सम्भूयकरणमपेक्षार्थः । तदा यदि पूर्व्वस्थितस्येति विशेषणापेक्षा तदा क्षणिकस्य नैवं कदाचिदित्यनपेक्षैवाक्षीणा । अथ पूर्व्वस्थितस्येत्यनपेक्ष्यमिलितावस्थितस्यैव[१] करणमपेक्षार्थस्तदा सापेक्षतैव नानपेक्षा । तथा च नोभयव्यावृत्तिरित्यसिद्धः प्रथमो व्यापकानुपलम्भः । तथैकत्वानेकत्वयोरपि व्यापकयोः क्षणिकाद्व्यावृत्तिरसिद्धा । तत्तद्व्यावृत्तिभेदमाश्रित्योपादानत्वादिकाल्पनिकस्वभावभेदेऽपि परमार्थत एकेनैव स्वरूपेणानेककार्य्यनिष्पादनादुभयव्यावृत्तेरभावात् । यच्च बीजस्यैकेनैव[२] स्वभावेन कारकत्वे क्षित्यादीनामङ्कुरस्वाभाव्यापत्तिरन्यथा कारणाभेदेऽपि कार्य्यभेदेऽपि[३] कार्य्यस्याहेतुकत्वप्रसङ्गादित्युक्तं तदसङ्गतं । कारणैकत्वस्य कार्य्यभेदस्य च पटुनेन्द्रियप्रत्यक्षेण प्रसाधनात्[४] । एककारणजन्यत्वैकत्वयोर्व्याप्तेः प्रतिहतत्वात् । प्रसङ्गस्यानुपदत्वात् । यच्च कारणाभेदे

---

१ मिलितावस्थस्यैव ।
२ A omits एव ।
३ A omits अपि ।
४ A साधनात् ।

कार्य्याभेद इत्युक्तं तत्र सामग्रीस्वरूपं कारणमभिप्रेतं सामग्रीसजातीयत्वे न कार्य्यविजातीयतेत्यर्थः। न पुनः सामग्रीमध्यगतेनैकेनानेकं कार्य्यं[1] न कर्त्तव्यं नाम। एकस्मादनेकोत्पत्तेः प्रत्यक्षसिद्धत्वात्। न चैवं प्रत्यभिज्ञानात् कालभेदेऽप्यभेदसिद्धिरित्युक्तप्रायम्। न चेन्द्रियप्रत्यक्षं भिन्नदेशं सप्रतिघं दृश्यमर्थद्वयमेकमेवोपलम्भयतीति क्वचिदुपलब्धं येन तत्रापि भेदशङ्का स्यात्। शङ्कायाम्वा पटुप्रत्यक्षस्याप्यपलापे सर्व्वप्रमाणोच्छेदप्रसङ्गात्[2]। नापि सन्दिग्धव्यतिरेकः[3]। क्षित्यादेर्द्रव्यान्तरस्य वीजस्वभावत्वेनास्माभिरस्वीकृतत्वात् अनुपकारिण्यपेक्षायाः प्रत्याख्यानात्। व्यापकानुपलम्भस्यासिद्धत्वायोगात्। तदेतौ द्वावपि व्यापकानुपलम्भावसिद्धौ न क्षणिकात् सत्त्वन्निवर्त्तेत[4] इति नायमसाधारणो हेतुः। अपि च विद्यमानो भावः साध्येतरयोरनिश्चितान्वयव्यतिरेको गन्धवत्त्वादिवदसाधारणो युक्तः। प्रकृतव्यापकानुपलम्भाच्च सर्व्वथार्थक्रियैवासती उभाभ्यांम्वादिभ्यामुभयस्माद्विनिवर्त्तितत्वेन निराश्रयत्वात्। तत् कथमसाधारणानैकान्तिकी भविष्यत्यलं[5] प्रलापिनि

१ A omits न।

२ A adds इति।

३ A नापि सत्त्वहेतोः सन्दिग्धव्यतिरेकत्वम्।

४ A निवर्त्तयते।

५ A adds पक्ष।

निर्ब्बन्धेन। तदेवं शक्तस्य क्षेपायोगात् समर्थव्यवहार-गोचरत्वं जननेन व्याप्तमिति प्रसङ्गविपर्य्ययोः सत्त्वे हेतोरपि नानैकान्तिकत्वमतः क्षणभङ्गसिद्धिरिति स्थितम् ॥

इति साधर्म्यदृष्टान्तेऽन्वयरूपव्याप्त्या
क्षणभङ्गसिद्धिः समाप्ता ॥

कृतिरियं महापण्डितरत्नकीर्त्तिपादानामिति[1] ॥

[1] A has the following post-colophon statement ग्रन्थप्रमाणम्। २५०। अभियुक्तक चित्तोपनदनेन प्रकरणमिदं लिखितमात्मार्थं परार्थं चेति।

# क्षणभङ्गसिद्धिः व्यतिरेकात्मिका।

[1]व्यतिरेकात्मिका व्याप्तिरा[१६]क्षिप्तान्वयरूपिणी।
वैधर्म्यवति दृष्टान्ते सत्त्वे हेतोरिहोच्यते॥

यत्सत्तत् क्षणिकं यथा घटः सन्तश्चामी विवादास्पदीभूताः पदार्था इति स्वभावो हेतुः। न तावदस्यासिद्धिः सम्भवति। यथायोगं प्रत्यक्षानुमाणप्रमाणप्रतीते धर्म्मिणि सत्त्वशब्देनाभिप्रेतस्यार्थक्रियाकारित्वलक्षणस्य साधनस्य प्रमाणसमधिगतत्वात्। न च विरुद्धानैकान्तिकते। व्यापकानुपलम्भात्मना विपर्य्ययबाधकप्रमाणेन व्याप्तेः प्रसाधनात्। व्यापकञ्चार्थक्रियाकारित्वस्य क्रमाक्रमिकार्य्यविषयत्वमेव। न पुनः कारणगतौ कार्य्यगतौ वा क्रमाक्रमावस्य व्यापकौ। हत्वा कारणलक्षणस्य क्रमस्य क्षणिकेऽसम्भवात्। कार्य्यगताभ्यां क्रमाक्रमाभ्यां कारणशक्तेर्व्याप्त्ययोगात्। तस्मात् कारणगतया क्रमाक्रमिकार्य्यविषयतया व्याप्यमाना कारणशक्तिः क्रमाक्रमव्याप्तेत्युच्यते। विषयेण विषयिनिर्द्देशात्। व्यवहारलाघवार्थं। ततश्च यद्यपि सर्व्वत्र क्रमाक्रमौ

---

1 A has an invocation here नमो लोकेश्वराय॥

सत्त्वस्य[1] व्यापकावित्याद्युच्यते। तथापि क्रमाक्रमि-कार्य्यविषयत्वमेव व्यापकं बोद्धव्यं। ननु यदैकमेव कार्य्यमङ्कुरादिकमुत्पद्यते, तदा कथं कार्य्यगतक्रमाक्रम-व्यवस्थेति चेत्।

उच्यते। यद्यप्येकमेव कार्य्यं भिन्नकालकार्य्यमपेक्ष्य क्रमस्तदभावाच्चाक्रम स्तत्कारित्वमेव क्रमाक्रमकारित्वं। तथाप्यपेक्षणीयविषयभेदात् क्रमाक्रमयोरसाङ्कर्य्यमेव। पितृपुत्रत्ववत्। कः पुनरसौ व्याप्तिप्रसाधको व्यापका-नुपलम्भ इति चेत्। उच्यते। यस्य क्रमाक्रमिकार्य्य-विषयत्वन्नास्ति, न तत् शक्तं, यथा शशविषाणं। नास्ति च नित्याभिमतस्य भावस्य क्रमाक्रमिकार्य्य-विषयत्वमिति व्यापकानुपलम्भः। न तावदयमसिद्धो वक्तव्यः। नित्यस्य धर्म्मिणः क्रमाक्रमिकार्य्यविषयत्वेन व्यापकेन सह विरोधसद्भावात्, तथा हि पूर्व्वापर-कालयोरेकत्वे नित्यत्वं क्षणद्वयेपि भेदे क्रमाक्रमित्वं। ततश्च नित्यत्वं क्रमाक्रमित्वञ्चेत्यभिन्नत्वं भिन्नत्वञ्चेत्युक्तं भवति। एतयोश्च परस्परपरिहारस्थितिलक्षणतया विरोधः। तत् कथं नित्ये क्रमाक्रमसम्भवः। नापि विरुद्धः सपक्षे भावात्। नचानैकान्तिकः। क्रमाक्रमा-

---

१ A सत्त्वे।

भावस्यार्थक्रियासामर्थ्याभावेन व्याप्तत्वात् । तथा हि न तावत् क्रमाक्रमाभ्यामन्यः प्रकारोस्ति, येनार्थक्रिया-सम्भावनायां क्रमाक्रमाभ्यामर्थक्रियाव्याप्तिर्न स्यात् । तस्मादर्थक्रियामात्रानुबद्धतया तयोरन्यतरप्रकारस्य । उभयोरभावे चाभावादर्थक्रियामात्रस्येति ताभ्यां तस्य व्याप्तिसिद्धिः । पक्षीकृते च तयोरभावेनार्थक्रियाशक्त्य-भावसिद्धौ कथमनेकान्तः । न हि व्याप्यव्यापकयो-र्व्याप्यव्यापकभावसिद्धिमुद्भूय[१७]व्याप्याभावेन व्याप-काभावस्य व्याप्तिसिद्धौ, उपायान्तरमस्तीति निरवद्यो-व्यापकानुपलम्भः । सत्त्वस्य क्षणिकत्वेन व्याप्तिं साधय-त्येव[1] । ननु व्यापकानुपलम्भतः सत्त्वस्य कथं स्वसाध्य-प्रतिबन्धसिद्धिः, अस्याप्यनेकदोषदुष्टत्वात् । तथा हि न तावदयं प्रसङ्गो हेतुः साध्यधर्म्मिणि प्रमाणसिद्ध-त्वात्, पराभ्युपगमसिद्धत्वाभावात्, विपर्य्ययपर्य्यवसाना-भावाच्च । अथ स्वतन्त्रः, तदाश्रयासिद्धः । अक्षणि-कस्याश्रयस्यासम्भवादप्रतीतत्वाद्वा । प्रतीति र्हि प्रत्य-क्षेणानुमानेन विकल्पमात्रेण वा स्यात् । प्रथमपक्षद्वये साक्षात्पारम्पर्य्येण वा स्वप्रतीतिलक्षणार्थकारित्वे मौलः साधारणो हेतुः । व्यापकानुपलम्भश्च स्वरूपासिद्धः

[1] A प्रसाधयत्येव ।

स्यात् । अर्थक्रियाकारित्वे क्रमाक्रमयोरन्यतरस्यावश्य-म्भावात् । अन्तिमपक्षे तु न कश्चिद्धेतुरनाश्रयः स्यात् विकल्पमात्रसिद्धस्य धर्म्मिणः सर्व्वत्र सुलभत्वात् । अपि च तत् कल्पनाज्ञानं प्रत्यक्षपृष्ठभावि वा स्यात्, लिङ्ग-जन्म वा, संस्कारजं वा, सन्दिग्धवस्तुकं वा, अवस्तुकं वा । तत्राद्यपक्षद्वये ऽक्षणिकस्य सत्त्वैवाव्याहता कथं बाधकावतारः । तृतीये तु न सर्व्वदा ऽक्षणिकसत्ता-निषेधः । तदर्पितसंस्काराभावे तत् स्मरणायोगात् । चतुर्थे तु सन्दिग्धाश्रयत्वं हेतुदोषः । पञ्चमे च तद्विषय-स्याभावो न तावत् प्रत्यक्षतः सिध्यति । अक्षणिकात्मनः सर्व्वदैव त्वन्मते ऽप्रत्यक्षत्वात् । न चानुमानतस्तदभावः प्रतिबद्धलिङ्गानुपलम्भादित्याश्रयासिद्धिस्तावदुद्धतां । एवं दृष्टान्तोपि प्रतिहन्तव्यः ॥

स्वरूपासिद्धोप्ययं हेतुः स्थिरस्यापि क्रमाक्रमिसह-कार्य्यपेक्षया क्रमाक्रमाभ्यामर्थक्रियोपपत्तेः । नापि क्रम-यौगपद्यपक्षोक्तदोषप्रसङ्गः । तथाहि क्रमिसहकार्य्यपे-क्षया क्रमिकार्य्यकारित्वन्तावदविरुद्धं ।

तथाच शङ्करस्य संक्षिप्तोऽयमभिप्रायः । सहकारिसा-कल्यं हि सामर्थ्यं । तद्वैकल्यञ्चासामर्थ्यं । न च तयोरा-विर्भावतिरोभावाभ्यान्तद्वतः काचित् क्षतिः, तस्य

ताभ्यामन्यत्वात्। तत्कथं सहकारिणोऽनपेक्ष्यकार्य्यकरणप्रसङ्ग इति॥

त्रिलोचनस्याप्ययं संक्षिप्तार्थः। कार्य्यमेव हि सहकारिणमपेक्षते। न कार्य्योत्पत्तिहेतुः। यस्माद्द्विविधं सामर्थ्यन्निजमागन्तुकञ्च सहकार्य्यन्तरं। ततो ऽक्षणिकस्यापि क्रमवत्सहकारिनानात्वादपि क्रमवत्कार्य्यनानात्वोपपत्तेरशक्यं भावानां प्रतिक्षणमन्यान्यत्वमुपपादयितुमिति॥

न्यायभूषणोऽपि लपति। प्रथमकार्य्योत्पादनकाले ह्युत्तरकार्य्योत्पादनस्वभावः। अतः प्रथमकाल एवाशे[१८]षाणि कार्य्याणि कुर्य्यादिति चेत्। तदिदं माता मे वन्ध्येत्यादिवत् स्ववचनविरोधादयुक्तं। योह्युत्तरकार्य्यजननस्वभावः स कथमादौ तत्कार्य्यं कुर्य्यात्। न तर्हि तत्कार्य्यकरणस्वभावः। नहि नीलोत्पादनस्वभावः पीतादिकमपि करोतीति॥

वाचस्पतिरपि पठति। नन्वयमक्षणिकः स्वरूपेण कार्य्यञ्जनयति। तच्चास्य स्वरूपं तृतीयादिष्विव क्षणेषु द्वितीयेऽपि क्षणे सदिति तदापि जनयेत्। अकुर्व्वन् वा तृतीयादिष्वपि न कुर्व्वीत। तस्य तादवस्थ्यात्। अतादवस्थ्ये वा तदेवास्य क्षणिकत्वं।

अत्रोच्यते । सत्यं[१] स्वरूपेण कार्य्यञ्जनयति न तु तेनैव । सहकारिसहितादेव ततः कार्य्योत्पत्तिदर्शनात् । तस्मात् व्याप्तिवत्कार्य्यकारणभावोऽप्येकत्रान्ययोगव्यवच्छेदेनान्यत्रायोगव्यवच्छेदेनावबोद्धव्यः । तथैव लौकिकपरीक्षकाणां सम्प्रतिपत्तेरिति न क्रमिकार्य्यकारित्वपक्षोक्तदोषावसरः ॥

नाप्यक्षणिके यौगपद्यपक्षोक्तदोषावकाशः । ये हि कार्य्यमुत्पादितवन्तो द्रव्यविशेषास्तेषां व्यापारस्य नियतकार्य्योत्पादनसमर्थस्य निष्पादिते कार्य्ये ऽनुवर्त्तमानेष्वपि तेषु द्रव्येषु निवृत्तार्थादूना सामग्री जायते । तत्कथं निष्पादितं निष्पादयिष्यति । न हि दण्डादयः स्वभावेनैव कर्त्तारो येनामी निष्पत्तेरारभ्य कार्य्यं विदध्युः । किन्तर्हि व्यापारावेशिनः । न चैयता स्वरूपेण न कर्त्तारः स्वरूपकारकत्वनिर्व्वाहपरतया व्यापारसमावेशादिति ॥

किञ्च क्रमाक्रमाभावश्च भविष्यति न च सत्वाभाव इति सन्दिग्धव्यतिरेकोप्ययं व्यापकानुपलम्भः । न हि क्रमाक्रमाभ्यामन्यप्रकारस्याभावः सिद्धः । विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वात् । किञ्च प्रकारान्तरस्य

---

१ A. omits सत्यम् ।

दृश्यत्वेनात्यन्तनिषेधः । अदृश्यत्वे तु नासत्तानिश्चयो विप्रकर्षिणामिति न क्रमाक्रमाभ्यामर्थक्रियासामर्थ्यस्य व्याप्तिसिद्धिः । अतः सन्दिग्धव्यतिरेको ऽपि व्यापकानुपलम्भः । किञ्च दृश्यादृश्यसहकारिप्रत्ययसाकल्यवतः क्रमयौगपद्यस्यात्यन्तपरोक्षत्वात् तेन व्याप्तं सत्त्वमपि परोक्षमेवेति न तावत्प्रतिबन्धः प्रत्यक्षतः सिध्यति नाप्यनुमानतः, तत्प्रतिबद्धलिङ्गाभावादिति । अपि च क्रमाक्रमाभ्यामर्थक्रियाकारित्वं व्याप्तमित्यतिसुभाषितं । यदि क्रमेण व्याप्तं कथमक्रमेण । अथाक्रमेण न तर्हि क्रमेण; क्रमाक्रमाभ्यां व्याप्तमिति तु ब्रूवता व्याप्तेरेवाभावः प्रदर्शितो भवति । नहि भवति । अग्निर्धूमभावाभावाभ्यां व्याप्त इति । अतो व्याप्तेरनैकान्तिकत्वं । अपि च किमिदं वाधकमक्षणिकानामसत्तां साध [१९] यति, उतस्वित्, अक्षणिकात् सत्त्वस्य व्यतिरेकं, अथ सत्त्वक्षणिकत्वयोः प्रतिवन्धं । न पूर्व्वो विकल्पः । उक्तक्रमेण हेतोराश्रयासिद्धत्वात् । न च द्वितीयः । यतो व्यापकनिवृत्तिसहिता व्याप्यनिवृत्तिर्व्यतिरेकशब्दस्यार्थः । सा च यदि प्रत्यक्षेण प्रतीयते तदा तद्धेतुः स्यादिति सत्त्वमनैकान्तिकं । व्यापकानुपलम्भः स्वरूपासिद्धः । अथ सा विकल्प्यते । तदा पूर्व्वोक्तक्रमेण पञ्चधा विकल्प्य

विकल्पो दूषणीयः। अत एव न तृतीयो ऽपि विकल्पः। व्यतिरेकासिद्धौ सम्बन्धासिद्धेः। किञ्च न भूतलवद्-चाक्षणिको धर्म्मी दृश्यते। न च स्वभावानुपलम्भे व्यापकानुपलम्भः कस्यचित् दृश्यस्य प्रतिपत्तिमन्तरेणान्तर्भावयितुं शक्य इति। किञ्चास्याभावधर्म्मत्वे। आश्रया सिद्धत्वमितरेतराश्रयत्वञ्च। भावधर्म्मत्वे विरुद्धत्वञ्च। उभयधर्म्मत्वे चानैकान्तिकत्वमिति न चयीन्दोषजातिमतिपतति॥

यत्पुनरुक्तमक्षणिकत्वे क्रमयौगपद्याभ्यामर्थक्रियाविरोधादिति। तत्र विरोधसिद्धिमनुसरता विरोध्यपि प्रतिपत्तव्यः। तत्प्रतीतिनान्तरीयकत्वात् विरोधसिद्धेः। यथा तुहिनदहनयोः सापेक्षध्रुवभावयोश्च प्रतियोगी चाक्षणिकः प्रतीयमानः प्रतीतिकारित्वात् सन्नेव स्यात् अजनकस्याप्रमेयत्वात्। संवृतिसिद्धेनाक्षणिकत्वेन विरोधसिद्धिरिति चेत्। संवृतिसिद्धमपि वास्तवं काल्पनिकं वा स्यात्। यदि वास्तवं कथन्तस्यासत्त्वं कथञ्चार्थक्रियाविरोधः। अर्थक्रियां कुर्व्वद्धि वास्तवमुच्यते।

अथ काल्पनिकं। तत्र किं विरोधो वास्तवः काल्पनिको वा। न तावद्वास्तवः कल्पितविरोधिविरोधत्वात्। वन्ध्यापुत्रविरोधवत्। अथ विरोधोऽपि काल्प-

निकः । न तर्हि सत्त्वस्य व्यतिरेकः पारमार्थिक इति क्षणभङ्गो दत्तजलाञ्जलिरिति । अयमेव चोद्यप्रबन्धोऽस्मद् गुरुभिः संगृहीतः ॥

नित्यत्वास्ति न वा प्रतीतिविषयस्तेनाश्रयासिद्धता । हेतोः स्वानुभवस्य चाक्षतिरतः क्षिप्तः सपक्षोऽपि च । शून्यश्च द्वितीयेन सिध्यति न चासत्तापि सत्ता यथा नो नित्येन विरोधसिद्धिरसता शक्या क्रमादेरपीति ॥

अत्रोच्यते । इह वस्तुन्यपि धर्म्मिधर्म्मव्यवहारो दृष्टो यथा गवि गोत्वं, पटे शुक्लत्वं तुरगे गमनमित्यादि । अवस्तुन्यपि धर्म्मिधर्म्मव्यवहारो दृष्टो यथा शशविषाणे तीक्ष्णत्वाभावो वन्ध्यापुत्रे वक्रत्वाभावो गगणारविन्दे गन्धाभाव इत्यादि । तत्रावस्तुनि धर्म्मित्वन्नास्तीति किम्वस्तुधर्म्मेण धर्म्मित्वन्नास्ति । आहोस्विदवस्तुधर्म्मेणापि । प्रथमपक्षे सिद्धसाधनं द्वितीयपक्षे तु स्ववचनविरोधः । यदाहु गुरवः ।

धर्म्मस्य कस्यचिद [२०] वस्तुनि मानसिद्धा
बाधाविधिव्यवहृतिः किमिहास्ति नो वा ।
क्वाप्यस्ति चेत् कथमियन्ति न दूषणानि
नास्त्येव चेत् स्ववचनप्रतिरोधसिद्धिः ॥

अवस्तुनो धर्म्मित्वस्वीकारपूर्व्वकत्वस्य व्यापकस्याभावे

आश्रयासिद्धिदूषणस्यानुपन्यासप्रसङ्गइत्यर्थः। येनैव हि वचनेनावस्तुनो[१] धर्म्मित्वाभावेन धर्म्मेण धर्म्मित्वमभ्युपगतं। परस्तु प्रतिषिध्यत इति व्यक्तमिदमीश्वरचेष्टितं। तथा ह्यवस्तुनो धर्म्मित्वन्नास्तीति वचनेन धर्म्मित्वाभावः किमवस्तु विधीयते, अन्यच्च वा, न वा क्वचिदपीति त्रयः पक्षाः।

प्रथमपक्षेऽवस्तुनो न धर्म्मित्वनिषेधः। धर्म्मित्वाभावस्य धर्म्मस्य तत्रैव विधानात्। द्वितीयेऽवस्तुनि किमायातं। अन्यत्र धर्म्मित्वाभावविधानात्। तृतीयस्तु पक्षो व्यर्थ एव निराश्रयत्वात् इति कथमवस्तुनो धर्म्मित्वनिषेधः। तस्माद्यथा प्रमाणोपन्यासः प्रमेयस्वीकारपूर्व्वकत्वेन व्याप्तः। वाचकशब्दोपन्यासो वा वाच्यस्वीकारपूर्व्वकत्वेन व्याप्तः। तथाऽवस्तुनो धर्म्मित्वं नास्तीति वचनोपन्यासोऽवस्तुनो धर्म्मित्वस्वीकारपूर्व्वत्वेन व्याप्तः। अन्यथा तद्वचनोपन्यासस्य व्यर्थत्वात्। तद्यदि वचनोपन्यासो व्याप्यधर्म्मः। तदाऽवस्तुनो धर्म्मित्वस्वी-

---

१ A adds धर्म्मित्वं प्र × × × × × नो। A has lost about ten letters. The reading of B is evidently wrong. The sentence may be thus emended:—

येनैव हि वचनेनावस्तुनो धर्म्मित्वं प्राप्तं तेनैव वचनेनावस्तुनो धर्म्मित्वाभावेन धर्म्मेणा वस्तुनो धर्म्मित्वमभ्युपगतम्।

कारोपि व्यापकधर्म्मो दुर्व्वारः । अथ न व्यापकधर्म्मः । तदा व्याप्यस्यापि वचनोपन्यासस्यासम्भव इति मूकतैवाच बलादायातेति कथं न स्ववचनविरोध[1]सिद्धिः । नह्यब्रुवन् परम्बोधयितुमीशः । ब्रुवन् वा दोषमिमं परिहर्त्तुमिति महति सङ्कटे प्रवेशः । अवस्तुप्रस्तावे सहृदयाणां मूकतैव युज्यत इति चेत् । अहो महद्वैदग्ध्यं । अवस्तुप्रस्तावे स्वयमेव यथाशक्ति वल्गित्वा भग्नो मूकतैव न्यायप्राप्तेति परिभाषया निःसर्त्तुमिच्छति । नचावस्तुप्रस्तावो राजदण्डेन विना चरणमर्द्दनादिनानिष्टिमाचेण वा प्रतिषेद्धुं शक्यते[2] । ततश्चाचापि क्रमाक्रमाभावस्य साधनत्वे[3] सत्त्वाभावस्य च साध्यत्वे सन्दिग्धवस्तुभावस्यावस्त्वात्मनो वा क्षणिकस्य धर्म्मित्वं केन प्रतिहन्यते । चिविधो हि धर्म्मो दृष्टः कश्चिद्वस्तुनियतो नीलादिः । कश्चिदवस्तुनियतो यथा सर्व्वोपाख्याविरहः । कश्चिदुभयसाधारणो यथानुपलब्धिमाचं । तच वस्तुधर्म्मेणावस्तुनो धर्म्मित्वनिषेध इति युक्तं । नत्ववस्तुधर्म्मेण । वस्त्ववस्तुधर्म्मेण वा । स्ववचनस्यानुपन्यासप्रसङ्गादित्यक्षणिकस्याभावे सन्देहे[4] वाऽवस्तु-

---

१ A प्रतिरोध॰ ।
२ B साधनत्वेन ।
३ A शक्यः ।
४ A adds ऽपि ।

धर्म्मेण धर्म्मित्वमव्याहतमिति नायमाश्रयासिद्धो व्यापकानुपलम्भः ॥

अक्षणिकाप्रतीता वयमा[1]श्रयासिद्धो हेतुरिति तु युक्तमुक्तं । तदप्रतीतौ तद्व्यवहारायोगात् । केवलमसौ व्यवहाराङ्गभूता प्रतीति र्वस्त्ववस्तुनोरेकरूपा न भवति । साक्षात्पारम्पर्य्येण वस्तुसामर्थ्यभाविनी हि वस्तु(२१)प्रतीतिः । यथा प्रत्यक्षमनुमानं प्रत्यक्षपृष्ठभावी च विकल्पः । अवस्तुनस्तु सामर्थ्याभावात् विकल्पमात्रमेव प्रतीतिः । वस्तुनो हि वस्तुबलभाविनी प्रतीति| र्यथा-साक्षात्प्रत्यक्षं परम्परया तत्पृष्ठभावी विकल्पोऽनुमानञ्च । अवस्तुनस्तु न वस्तुबलभाविनी प्रतीतिस्तत्कारकत्वेनावस्तुत्वहानिप्रसङ्गात् । तस्माद्विकल्पमात्रमेवावस्तुनः प्रतीतिः । नह्यभावः कश्चिद्विग्रहवान् यः साक्षात्कर्त्तव्योऽपि तु व्यवहर्त्तव्यः । स च व्यवहारो विकल्पादपि सिध्यत्येव । अन्यथा सर्व्वजनप्रसिद्धोऽवस्तुव्यवहारो न स्यात् । इष्यते च तद्धर्मित्वप्रतिषेधानुबन्धादित्यकामकेनापि विकल्पमात्रसिद्धोऽक्षणिकः स्वीकर्त्तव्य इति नायमप्रतीतत्वादप्याश्रयासिद्धो हेतुर्वक्तव्यः । ततश्चाक्षणिकस्य विकल्पमात्रसिद्धत्वे यदुक्तं न कश्चिद्धे-

१ A has वा ।

तुरनाश्रयः स्यादिकल्पमात्रसिद्धस्य धर्म्मिणः सर्व्वत्र सुलभत्वादिति तदसङ्गतं। विकल्पमात्रसिद्धस्य धर्म्मिणः सर्व्वत्र सम्भवेऽपि वस्तुधर्म्मेण धर्म्मित्वायोगात्। वस्तुधर्म्महेतुत्वापेक्षया आश्रयासिद्धस्यापि हेतोः सम्भवात्। यथा आत्मनो विभुत्वसाधनार्थमुपन्यस्तं सर्व्वत्रोपलभ्यमानगुणत्वादिति साधनं। विकल्पस्यायं हेतूपन्यासात्। पूर्व्वं सन्दिग्धवस्तुकः, समर्थिते तु हेतावस्तुक इति ब्रूमः। न चात्र सन्दिग्धाश्रयत्वं नाम हेतुदोषः। आस्तान्तावत्। सन्दिग्धस्यावस्तुनोपि विकल्पमात्रसिद्धस्यावस्तुधर्म्मापेक्षया धर्म्मित्वप्रसाधनात्। वस्तुधर्म्महेतुत्वापेक्षयैव सन्दिग्धाश्रयस्य हेत्वाभासस्य व्यवस्थापनात्। यथेह निकुञ्जे मयूरः केकायितादिति। अवस्तुकविकल्पविषयस्यासत्त्वन्तु व्यापकानुपलम्भादेव प्रसाधितं। एवं दृष्टान्तस्यापि व्योमादेर्द्धर्म्मित्वं विकल्पमात्रेण प्रतीतिश्चावगन्तव्या। तदेवमवस्तुधर्म्मापेक्षयाऽवस्तुनोधर्म्मित्वस्य विकल्पमात्रेण प्रतीतेश्चापह्नोतुमशक्यत्वान्नायमाश्रयासिद्धो हेतुः। न दृष्टान्तक्षतिः॥

न चैष स्वरूपासिद्धः। अक्षणिके धर्म्मिणि क्रमाक्रमयो र्व्यापकयोरयोगात्। तथा हि यदि तस्य प्रथमे क्षणे द्वितीयादिक्षणभाविकार्य्यकारणसामर्थ्यमस्ति तदा

प्रथमक्षणभाविकार्य्यवत् द्वितीयादिक्षणभाव्यपि कार्य्यं कुर्य्यात्। समर्थस्य क्षेपायोगात्। अथ तदा सहकारिसाकल्यलक्षणसामर्थ्यं नास्ति। तद्वैकल्यलक्षणस्यासामर्थ्यस्य सम्भवात्। न हि भावः स्वरूपेण करोतीति स्वरूपेणैव करोति। सहकारिसहितादेव ततः कार्य्योत्पत्तिदर्शनात् इति चेत्। यदा तावदमी मीलिताः सन्तः कार्य्यं कुर्व्वते तदैकार्थकरणलक्षणं सहकारित्वमेषामस्तु को नि (२२) षेद्धा। मिलितैरेव तु तत्कार्य्यङ्कर्त्तव्यमिति कुतो लभ्यते। पूर्व्वापरकालयोरेकस्वभावत्वात् भावस्य। सर्व्वदा जननाजननयोरन्यतरनियमप्रसङ्गस्य दुर्व्वारत्वात्। तस्मात् सामग्रीजनिका नैकं जनकमिति स्थिरवादिनाम्मनोराज्यस्याप्यविषयः।

किं कुर्म्मो दृश्यते तावदेवमिति चेत्। दृश्यतां किन्तु पूर्व्वस्थितादेव पश्चात् सामग्रीमध्यप्रविष्टाद्भावात् कार्य्योत्पत्तिरन्यस्मादेव विशिष्टसामग्रीसमुत्पन्नात् क्षणादिति विवादपदमेतत्। तच्च प्रागपि सम्भवे सर्व्वदैव कार्य्योत्पत्ते र्नवा कदाचिदपीति विरोधमसमाधाय तत एव कार्य्योत्पत्तिरिति साध्यानुवादमात्रप्रवृत्तः क्षपामर्हति।

न च प्रत्यभिज्ञानादेवैकत्वसिद्धिः। तत् पौरुषस्य लूनपुनर्ज्जातकेशकुशकदलीस्तम्बादौ निर्द्दलनात्। विस्तरेण

च प्रत्यभिज्ञानदूषणमस्माभिः स्थिरसिद्धिदूषणे प्रतिपादितमिति तत एवावधार्य्यं।

ननु कार्य्यमेव सहकारिणमपेक्षते। न तु कार्य्योत्पत्तिहेतुः। यस्माद्द्विविधं सामर्थ्यं निजमागन्तुकञ्च सहकार्य्यन्तरं। ततोऽक्षणिकस्यापि क्रमवत् सहकारिनानात्वादपि क्रमवत्कार्य्यनानात्वमिति चेत्, भवतु तावन्निजागन्तुकभेदेन द्विविधं सामर्थ्यं। तथापि तत्प्रातिस्विकं वस्तुस्वलक्षणं सद्यः क्रियाधर्म्मकमवश्याभ्युपगन्तव्यम्। तद्यदि प्रागपि, प्रागपि कार्य्यप्रसङ्गः। अथ पश्चादेव न तदा स्थिरोभावः।

न च कार्य्यं सहकारिणोऽपेक्षत इति युक्तं। तस्यासत्त्वात्। हेतुश्च सन्नपि यदि स्वकार्य्यन्नकरोति तदा तत्कार्य्यमेव तन्न स्यात्, स्वातन्त्र्यात्। यच्चोक्तं। योऽप्युत्तरकार्य्यजननस्वभावः स कथमादौ कार्य्यं कुर्य्यात्। न तर्हि तत्कार्य्यकरणस्वभावः। न हि नीलोत्पादनस्वभावः पीतादिकमपि करोतीति। तदसङ्गतं। स्थिरस्वभावत्वे भावस्योत्तरकालमेवेदं कार्य्यन्नपूर्व्वकालमिति कुत एतत्। तदभावाच्च कारणमप्युत्तरकार्य्यकरणस्वभावमित्यपि कुतः। किं कुर्म्म उत्तरकालमेव तस्य जन्मेति चेत्। स्थिरत्वे तदनुपपद्यमानमस्थिरतामादि-

णतु। स्थिरत्वेऽप्येष एव स्वभावस्तस्य यदुत्तरक्षण एव कार्य्यं करोतीति चेत्। न। प्रमाणबाधिते स्वभावाभ्युपगमायोगादिति न तावदक्षणिकस्य क्रमिकार्य्य कारित्वमस्ति। नाप्यक्रमिकार्य्यकारित्वसम्भवः। द्वितीयेऽपि क्षणे कारकस्वरूपसद्भावे पुनरपि कार्य्यकरणप्रसङ्गात्। कार्य्यं निष्पन्ने तद्विषयव्यापाराभावादूना सामग्री न निष्पादितं निष्पादयेदिति चेत्। न। सामग्रीसम्भवासम्भवयोरपि सद्यः क्रियाकारकस्वरूपसम्भवे जनकत्वमवार्य्यमिति प्रागेव प्रतिपादनात्। कार्य्यस्य हि निष्पादितत्वात् पुनः कर्त्तुमशक्यत्वमे(२३)व कारणमसमर्थमावेदयति। तदयमक्षणिके क्रमाक्रमिकार्य्यकारित्वाभावो न सिद्धः। न च क्रमाक्रमाभ्यामपरप्रकारसम्भवो येन ताभ्यामव्याप्तौ सन्दिग्धव्यतिरेको हेतुः स्यात्। प्रकारान्तरशङ्कायां तस्यापि दृश्यादृश्यत्वप्रकारद्वयदूषणेऽपि स्वपक्षेप्यनाश्वासप्रसङ्गात्। तस्मादन्योऽन्यव्यवच्छेदस्थितयोर्नापरः प्रकारः सम्भवति। स्वरूपाप्रविष्टस्य वस्तुनोऽवस्तुनोवाऽन्यत्वात्। प्रकारान्तरस्यापि क्रमस्वरूपाप्रविष्टत्वात्। तथातीन्द्रियस्य सहकारिणोऽदृश्यत्वेप्ययोगव्यवच्छेदेन दृश्यसहकारिसहितस्य दृश्यस्यैव सत्त्वस्य दृश्यक्रमाक्रमाभ्यां व्याप्तिः

प्रत्यक्षादेव सिध्यति। एवं क्रमाक्रमाभ्यामर्थक्रियाकारित्वं व्याप्तमिति क्रमाक्रमयोरन्योऽन्यव्यवच्छेदेन स्थितत्वादेतत्प्रकारद्वयपरिहारेणार्थक्रियाकारित्वमन्यच न गतमित्यर्थः। अत एवैतयोर्विनिवृत्तौ निवर्त्तेत।

त्रिलोचनस्यापि विकल्पत्रये प्रथमदूषणमाश्रयासिद्धिदोषपरिहारतो निरस्तं। द्वितीयञ्चासङ्गतं विकल्पज्ञानेन व्यतिरेकस्य प्रतीतत्वात्। नह्यभावः कश्चित् विग्रहवान् यः साक्षात्कर्त्तव्योऽपि तु विकल्पादेव व्यवहर्त्तव्यः। न ह्यभावस्य विकल्पादन्याप्रतिपत्तिरप्रतिपत्तिर्वा सर्व्वथोभयथापि तद्व्यवहारहानिप्रसङ्गात्। एवं वैधर्म्म्यदृष्टान्तस्य हेतुव्यतिरेकस्य च विकल्पादेव प्रतीतिः। तृतीयमपि दूषणमसङ्गतं। व्यापकानुपलम्भो निर्द्दोषत्वस्य[1] क्षणिकत्वेन व्याप्तेरव्याहतत्वात्।

तदयं व्यापकानुपलम्भोऽक्षणिकस्यासत्त्वं, सत्त्वस्य ततो व्यतिरेकं क्षणिकत्वेन व्याप्तिञ्च साधयत्येकव्यापारात्मकत्वात् इति स्थितं।

ननु व्यापकानुपलब्धिरिति यद्यनुपलब्धिमात्रन्तदा न तस्य साध्यबुद्धिजनकत्वमवस्तुत्वात्। न चान्योपलब्धिर्व्यापकानुपलब्धिरभिधातुं शक्या भूतलादिवत्

---

१ B निर्दोषे सत्त्वस्य।

अन्यस्य कस्यचिदनुपलब्धेरिति चेत् तदसङ्गतं। धर्म्युपलब्धेरेवान्यत्राप्यनुपलब्धितया व्यवस्थापनात्। यथा नेह शिंशपा वृक्षाभावादित्यत्र वृक्षापेक्षया केवलप्रदेशस्य धर्म्मिण उपलब्धिर्दृश्यानुपलब्धिः। शिंशपापेक्षया च केवलप्रदेशस्य धर्म्मिण उपलब्धिरेव शिंशपाभावोपलब्धिरिति स्वभावहेतुपर्य्यवसायिव्यापारो व्यापकानुपलम्भः। तथा हि[1] नित्यस्य धर्म्मिणो विकल्पबुद्ध्यध्यवसितस्य क्रमिकारित्वाक्रमिकारित्वापेक्षया केवलग्रहणमेव क्रमिकारित्वाक्रमिकारित्वानुपलम्भ अर्थक्रियापेक्षया च। केवलप्रतीतिरेवार्थक्रियावियोगप्रतीतिरिति व्यापकानुपलम्भान्तरादस्य न कश्चिद्विशेषः।

अध्यवसायापेक्षया च वाह्येऽक्षणिकेऽव(२४)स्तुनि व्यापकाभावात् व्याप्याभावसिद्धिव्यवहारः। अध्यवसायश्च समनन्तरप्रत्ययवलायाताकारविशेषयोगादगृहीतेऽपि प्रवर्त्तनशक्तिर्वोद्धव्यः। ईदृशश्चाध्यवसायोऽर्थोऽस्मच्चिचाद्वैतसिद्धौ निर्व्वाहितः। स चाविसम्वादी व्यवहारः परिहर्त्तुमशक्यः; यद्व्यापकशून्यं; तद्व्याप्यशून्यमिति। एतस्यैवार्थस्यानेनापि क्रमेण प्रतिपादनात्। अयञ्च न्यायो यथा वस्तुभूते धर्म्मिणि तथाऽवस्तुभूते-

---

१ A omits हि।

ऽपीति को विशेषः । तथा ह्येकज्ञानमात्रविकल्प एव । यथा च, हरिणशिरसि तेनैकज्ञानसंसर्गिशृङ्गमुपलब्धं । शशशिरस्यपि तेन सहैकज्ञानसंसर्गित्वसम्भावनयैव शृङ्गं निषिध्यते । तथा नीलादावपरिनिष्ठितनित्यानित्यभावे क्रमाक्रमौ स्वधर्म्मिणा सार्द्धं एकज्ञानसंसर्गिणौ दृष्टौ नित्येऽपि यदि भवतः । नित्यग्राहिणा ज्ञानेन स्वधर्म्मिणा नित्येन सहैव गृह्येयातामिति सम्भावनया । एकज्ञानसंसर्गिद्वारकमेव प्रतिषिध्यते । कथं पुनरेतन्नित्यज्ञाने क्रमाक्रमयोरस्फुरणमिति । यावता क्रमाक्रमक्रोड़ीकृतमेव नित्यं विकल्पयाम इति चेत् । अतएव वाधकावतारो विपरीतरूपारोपमन्तरेण तस्य वैयर्थ्यात् । कालान्तरेणैकरूपतया नित्यत्वं । क्रमाक्रमौ च क्षणद्वये भिन्नरूपतया । ततो नित्यत्वस्य क्रमाक्रमिकार्य्यशक्तेश्च परस्परपरिहारस्थितलक्षणतया दुर्व्वारो विरोध इति कथं नित्ये क्रमाक्रमयोरन्तर्भावः । अनन्तर्भावाच्च शुद्धनित्यविकल्पेन दूरीकृतक्रमाक्रमसमारोपेण कथमुल्लेखः । ततश्च प्रतियोगिनि नित्येऽपि कल्प्यमाने, एकज्ञानसंसर्गिलक्षणप्राप्ते नित्योपलब्धिरेव नित्यविरुद्धस्यानुपलभ्यमानस्य क्रमाक्रमस्यानुपलब्धिः । ततएव वार्थक्रियाशक्तेरनुपलब्धेः । तस्मा-

व्यापकविवेकिधर्म्म्युपलब्धितया न व्यापकानुपलम्भान्तरादस्य विशेषः ।

नन्वेतदवस्तुधर्म्मिकोपयोगिकवस्त्वधिष्ठानत्वात् प्रमाणव्यवस्थाया इति चेत् । किमिदम्वस्त्वधिष्ठानत्वन्नाम । किम्परम्परयाऽपि वस्तुनः सकाशादागतत्वम्, अथ वस्तुनि केनचिदाकारेण व्यवहारकारणत्वं, वस्तुभूतधर्म्मिप्रतिवद्धत्वम्वा ।

यद्याद्यः पक्षस्तदा क्रमाक्रमस्यार्थक्रियायाश्च व्याप्तिग्रहणगोचरवस्तुप्रतिवद्धत्वमपि न क्षीणं । न च द्वितीयेऽपि पक्षे दोषः सम्भवति । क्षणभङ्गिवस्तुसाधनोपायत्वादस्य । न चान्तिमोऽपि विकल्पः कल्प्यते । तस्यैव नित्यविकल्पस्य वस्तुनो धर्म्मिभूतस्य क्रमाक्रमवद्वाह्यनित्योपादानशून्यत्वेनार्थक्रियावद्वाह्यनित्योपादानशून्यत्वप्रसाधनात् । पर्य्युदासवृत्त्या बुद्धिस्वभावभूता क्षणिकाकारे वस्तुभूते धर्म्मिणि प्रतिवद्धत्वसम्भवात् ।

अयमेव न्यायो (२५) न वक्ता बन्ध्यासुतश्चैतन्याभावादित्यादौ योज्यः । एतेन यथा वृक्षाभावादित्याद्यन्तर्भावयितुं शक्यो न तथायमिति चिलोचनोऽपि निरस्तः ।

न च क्रमाद्यभावस्त्वयों दोषजातिन्नातिक्रामति। अभावधर्म्मत्वेऽप्याश्रयासिद्धिदोषपरिहारात्। यत्त्वनेन प्रमाणान्तरान्नित्यानामसत्त्वसिद्धौ क्रमादिविरहस्याभावधर्म्मता न सिध्यतीत्युक्तं। तद्बालस्यापि दुरभिधानं। नित्यो हि धर्म्मी। असत्त्वं साध्यं। क्रमिकार्य्यकारित्वाक्रमिकार्य्यकारित्वविरहो हेतुः। अस्य चाभावधर्म्मत्वन्नाम। असत्त्वलक्षणस्वसाध्याविनाभावित्वमुच्यते। तच्च क्रमाक्रमेण सत्त्वस्य व्याप्तिसिद्धौ सत्त्वस्य व्याप्यस्याभावेन क्रमाक्रमस्य व्यापकस्य विरहो व्याप्तः सिध्यतीत्यभावधर्म्मत्वं प्रागेव विध्योर्व्याप्तिसाधकात् प्रत्यक्षादनुमानात्मकाद्वा प्रमाणान्तरात् सिद्ध मिति नेतरेतराश्रयत्वदोषः।

न च सत्तायामिवासत्तायामपि तुल्यप्रसङ्गो भिन्न न्यायत्वात्। वस्तुभूतं हि तच्च साध्यं साधनञ्च। तयोर्धर्म्म्यपि वस्तुभूत एव युज्यते॥

वस्तुनस्तु प्रत्यक्षानुमानाभ्यामेव सिद्धिः। तयोरभावे नियमेनाश्रयासिद्धिरिति युक्तं। असत्तासाधने त्ववस्तुधर्म्मा हेतुरवस्तुनि विकल्पमात्रसिद्धे धर्म्मिणि नाश्रयासिद्धिदोषेण दूषयितुं शक्यः। तथाऽक्षणिकस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधः सिध्यत्येव।

तथा विकल्पादेवाक्षणिको विरोधी सिद्धः। विकल्पोल्लिखितश्चास्य स्वभावो नापर इत्यपि व्यवहर्त्तव्यं। अन्यथा तदनुवादेन क्रमाक्रमादिरहितत्वादिनिषेधादिकमयुक्तं। तत् स्वरूपस्यानुल्लेखादित्यक्षणिकशशविषाणादिशब्दानुच्चारणप्रसङ्गः। अस्ति च। अतो यथा प्रमाणाभावेऽपि विकल्पसत्वस्य बन्ध्यासुतादेःसौन्दर्य्यादिनिषेधोऽनुरूपः, तथा विकल्पोपनीतस्यैवाक्षणिक स्वरूपस्य तत् प्रत्यनीकाकारेण सह विरोधव्यवस्थायां कीदृशो दोषः स्यात्। यदि चाक्षणिकानुभवाभावात् विरोधप्रतिषेधः, तर्हि बन्ध्यापुंचाद्यननुभवादेव सौन्दर्य्यादिनिषेधोऽपि माभूत।

नन्वेवं विरोधस्यापारमार्थिकत्वं। तद्द्वारेण क्षणभङ्गसिद्धिरप्यपारमार्थिकी स्यादिति चेत्। न हि विरोधोनाम वस्त्वन्तरं किञ्चित् उभयकोटिदत्तपादं सम्बन्धाभिधानमिष्यतेऽस्माभिरुपपद्यते वा। येनैकसम्बन्धिनो वस्तुत्वाभावेऽपरमार्थिकः स्यात्। यथा त्विष्यते तथा पारमार्थिक एव। विरुद्धाभिमतयोरन्योऽन्यस्वरूपपरिहारमात्रं विरोधार्थः। तच्च भावाभावयोः पारमार्थिकमेव न भावोऽभावरूपमाविशति। नाप्यभावो भावरूपं प्रविशतीति. योऽयमनयोरसङ्करनियमः स एव

पार(२६)मार्थिको विरोधः। कालान्तरैकरूपतया हि नित्यत्वं। क्रमाक्रमौ क्षणद्वयेऽपि भिन्नरूपतया ततो नित्यत्वक्रमाक्रमिकार्य्यकारकत्वयोर्भावाभाववत् विरोधो ऽस्त्येव। ननु नित्यत्वक्रमयौगपद्यवत्त्वञ्च विरुद्धौ विधूय नापरो विरोधोनाम। कस्य वास्तवत्वमिति चेत्। न। न हि धर्म्मान्तरस्य सम्भवेन विरोधस्य पारमार्थिकत्वं ब्रूमः। किन्तु विरुद्धयोर्धर्म्मयोः सद्भावेऽन्यथा विरोध-नामधर्म्मान्तरसम्भवेऽपि यदि न विरुद्धौ धर्म्मौ क्व पार-मार्थिकविरोधसद्भावः। विरुद्धौ च धर्म्मौ तावतैव तात्त्विको विरोधव्यवहारः। किमपरेण प्रतिज्ञामात्र-सिद्धेन विरोधनाम्ना वस्त्वन्तरेण। तदयं पूर्व्वपक्ष[१]-संक्षेपः।

नित्यन्नास्ति न वा प्रतीतिविषयस्तेनाश्रयासिद्धता
हेतोः स्वानुभवस्य च क्षतिरतः क्षिप्तः सपक्षोऽपि च।
शून्यश्च द्वितयेन सिध्यति न वा सत्तापि सत्तायथा
नोनित्येन विरोधसिद्धिरसता शक्या क्रमादेरपीति॥

अथ सिद्धान्तसंक्षेपः।

धर्म्मस्य कस्यचिवदस्तुनि मानसिद्धा
बाधाविधिव्यवहृतिः किमिहास्ति नो वा।

---

१ A omits पूर्व्वपक्ष।

काप्यस्ति चेत् कथमियन्ति न दूषणानि
नास्त्येव चेत् स्ववचनप्रतिरोधसिद्धिरिति ॥

तदेवं नित्यं न क्रमिकार्य्यकारित्वाक्रमिकार्य्यकारित्व-योगिपरमार्थः। ततश्च सत्तायुक्तमपि नैव परमार्थतः। ततश्च क्षणिकाक्षणिकपरिहारेण राश्यन्तराभावाद्-क्षणिकाद्विनिवर्त्तमानमिदं सत्त्वं क्षणिकत्व एव विश्रा-म्यन्ते न व्याप्तं सिध्यतीति सत्त्वात् क्षणभङ्गसिद्धिर-विरोधिनी ॥

प्रकृतेः सर्व्वधर्म्माणां यद्बोधान्मुक्तिरिष्यते।
स एव तीर्थ्यनिर्म्माथी क्षणभङ्गः प्रसाधितः ॥
विपक्षे वाधनाद्धेतोः साध्यात्मत्वं प्रसिध्यति।
तत् सिद्धौ द्विविधा व्याप्तिसिद्धिरत्राभिधीयते ॥

इति वैधर्म्यदृष्टान्ते व्यतिरेकरूपव्याप्त्या क्षणभङ्ग-सिद्धिः समाप्ता ॥ ० ॥

कृतिरियं महापण्डितरत्नकीर्त्तिपादानाम् ॥ ० ॥

---

पण्डिताशोकरचितम्

# अवयविनिराकरणम्।

नमः समन्तभद्राय ॥

अभ्यासातिशयस्तथा न विहितस्तादृक् श्रुतं नार्ज्जितं।
तन्मे चापलमर्थलेशमधुनानिर्म्मातुमीहे यदि।
एतत् सर्व्वमवेक्ष्ययन्निगदितं तत्पण्डितैर्दृश्यताम्।
प्रीणन्त्येव वि++++हि शिशोः प्रायः पितॄणां मनः ॥

यो विरुद्धधर्म्माध्यासवान् नासावेकः। यथा घटादिरर्थः। विरुद्धधर्म्माध्यासवांश्च स्थूलोनीलादिरर्थ इति व्यापकविरुद्धोपलब्धिः। इह दृश्यमानस्थूलोनीलादिरर्थो धर्म्मी, स चानुभवावसितोऽसति बाधके प्रत्यक्षसिद्धो हेतोराश्रयासिद्धिं निहन्ति। ननु भवद्भिरसन्नेवावयवी प्रतिज्ञायते स कथं प्रत्यक्षसिद्धः। नावयविनमिह धर्म्मिणं प्रतिपन्नाः स्मः किन्तु प्रतिभासमानस्थूलनीलादिकमर्थम्। न तर्हि विरुद्धधर्म्मसंसर्गादवयविन एकत्वं निषिद्धं स्यात्। यद्येवं कस्तर्हि भवतोऽवयवी। एकोऽनेकावयवसमवेतार्थ इति चेत्। स किं प्रतिभास-

मानात् स्थूलनीलादेरन्योऽनन्यो वा। न तावदन्यः, दृश्यत्वेनाभ्युपगमात्। न च प्रतिभासमानस्थूलनीलार्थव्यतिरेकेणापरः प्रतिभाति। अनन्यश्चेत्। तस्यैकत्वप्रतिक्षेपे कथमप्रतिषिद्धमेकत्वमवयविनः।

ननु च प्रतिभासमानश्चेदर्थोनावयविरूपोधर्म्मी। किन्तर्हि रूपमस्यावशिष्टप्रसिद्धं भविष्यतीति। उच्यते, प्रतिभासमानः स्थूलोनीलाकारः प्रत्यक्षसिद्धं रूपं, अवयवित्वानभ्यु(२)पगमेऽप्यवशिष्यते। न चैवं मन्तव्यं। न परमाणुसञ्चयवादिनां स्थूलाकारः कश्चिदर्थोऽस्ति यः प्रसिद्धो धर्म्मी स्यादिति। अवयव्यनभ्युपगमेऽपि हि निरवयवानेकात्मकः स्थूलोऽर्थोऽभ्युपगम्यमानः केन निषिद्धः। स्यान्मतं निरवयवाः परमाणवः कथं प्रत्यक्षे स्थूलेनाकारेणावभासेरन्, स्थूलसूक्ष्मयोर्विरोधादिति। तदपि न युक्तं। परमाणव एव हि पररूपदेशपरिहारेणोत्पन्नाः परस्परसहिता अवभासमाना देशवितानवन्तो भासन्ते। विततदेशत्वञ्च स्थूलत्वं, यत्तूक्तं स्थूलसूक्ष्मयोर्विरोध इति तत् किं पररूपदेशपरिहारवती निरवयवानामुत्पत्तिः। परस्परसहितानामेकविज्ञानावभासित्वं वा विरुद्धमिति वक्तुमध्यवसितं। इदञ्चेदविरुद्धं स्थूलाकारः किं विरुद्धः। अतएव निरवयवेषु बहुष्वेकस्मिन् विज्ञाने प्रतिभास-

मानेषु भवन् प्रतिभासकालभावी प्रतिभासधर्म्मः स्थूलाकारो न तु वास्तवः प्रत्येकमभावात् । प्रतिभासात् प्रागूर्द्ध्वं वा न तर्हि स्थूलोऽर्थ इति चेत् । न तदापि प्रतिभासयोग्यतासम्भवात् यदैव हि सञ्चिता भवेयुस्तदैव प्रतिभासयोग्याः परमाणवः । यदा च प्रतिभासयोग्या स्तदा स्थूलाः । यत्त्वाह निरवयवेषु वहुषु प्रतिभासमानेष्ववश्यमन्तरेणापि प्रतिभासितव्यं । अन्तरानवभासे परस्परविविक्ता एव नावभासिताः स्युः । विविक्तानवभासे चाणुमात्रकं पिण्डो भवेत् । न चान्तरमवभासमानमुत्पश्यामः । तदयं निरन्तर एक एव स्थूलो निरवयवानेकात्मको भवितुमर्हति, अपि त्वेकः स्थूलात्मक एवेति । सोऽप्येवं वाच्यः । किं विजातीयपरमाण्वन्तरमन्तरं । आहोस्वित् शून्याकाशयोगः । तत्र शून्याकाशयोगस्तावदवस्तुतया नेन्द्रियप्रत्यक्षगोचरः । अर्थसामर्थ्यभाविनि तत्रार्थस्यैव प्रतिभासोपपत्तेः । विजातीयन्त्विन्द्रियान्तरग्राह्यं कथमिन्द्रियान्तरज्ञानेऽवभासेताविषयत्वात् । तत् केनान्तरेणावभासितव्यमिति न विद्मः । यत् पुनरुच्यते । अन्तरालानवभासे विविक्ता नावभासेरन्निति ।

तत्रापि किमेषामन्तरं विवेकः पररूपशून्यता वेति

चिन्त्यं। निरूपयन्तस्तु पररूपशून्यतामेव विवेकं वस्तूनां पश्यामः। पररूपशून्याश्चेमे भासमानाः कथं विविक्ता नावभासेरन्निति। ननु च न प्रत्येकं परमाणूनां स्थूलाकारः। ततः समुदितानामेष्टव्यः। यथा च नीलपरमाणूनां प्रत्येकमसम्भवन् पीताकारो बहुष्वपि न दृश्यते। तथा प्रत्येकमसम्भवन् स्थूलाकारः कथं बहुषु स्यादिति।

उक्तमत्र। अविरुद्धो निरवयवाणां स्थूलाकार इति। (३) नीलविरुद्धस्तु पीताकारः। ततः पीतविरुद्धं नीलाकारं बिभ्राणेषु बहुष्वपि कथं पीताकारो भवेत्। नैवं निरवयवत्वविरुद्धः स्थूलाकारः यथोक्तान्न्यायात्। तदेवं प्रत्यक्षसिद्धः स्थूलोऽर्थ इह धर्म्मीति व्यवस्थितं। तदेवमवस्थिते धर्म्मिणि हेतोः सत्त्वमसत्त्वं वा निरूप्यं। तत्र पाण्यादावेकस्मिन् कम्पमाने स्थूलोऽर्थः सकम्पनिःकम्पे रूपे युगपत् प्रतिपद्यमानः कथं विरुद्धधर्म्मसंसर्गवान्न स्यात्। सकम्पनिःकम्पयोर्हि रूपयोः परस्पराभावाव्यभिचारनिमित्तकोऽस्ति विरोधः। भावाभावयोरेव हि परस्परपरिहारात्मको विरोधः। वस्तुनोस्तु तदभावाव्यभिचारेणैव। इह च सकम्पनिःकम्पे रूपे गृह्णत् प्रत्यक्षमेव सामर्थ्यात् परस्पराभावं साधयति।

व्यवहारयति तु निर्व्विशेषणीयानुपलब्धिः। स्यादेतत् पाण्यादावेकस्मिन्नवयवे कम्पमाने नावयविनः कम्प रूपमभ्युपेयं। अवयव एव हि तदा क्रियावान् दृश्यते। न चेदं मन्तव्यं। अवयवे क्रियावति तदाधेयेनावयविनापि क्रियावता भवितव्यं, यथा रथे चलति तदा रूढोऽपि चलतीति। अवयवावयविकर्म्मणोर्भिन्ननिमित्तत्वात्। निमित्तायौगपद्याच्च। यदा हि आत्मनः पाणिकम्पनेच्छा भवति। ततः प्रयत्नः। तदा प्रयत्नवदात्मपाणिसंयोगात् पाणौ क्रिया। यदा तु शरीरकम्पनार्थः प्रयत्नविशेष आत्मनो जायते। तदा तत्प्रयत्नवदात्मशरीरसंयोगात् शरीरे कर्म्मेति निमित्तभेदः। अतो भिन्नमिति तयोरेकस्मिन् जाते कथं निमित्तान्तरप्रतिबद्धजन्मा तदभावे तदपरोऽपि तथैव जायेत। रथ तदारूढकर्म्मणोस्तु सत्यपि निमित्तभेदे निमित्तयौगपद्यात् सद्भावः। तथा हि नोदनं रथकर्म्मणोऽसमवायिकारणं। तदारूढकर्म्मणस्तु नोद्यसंयोगः। तयोश्च सद्भावात् कर्म्मणी अपि यौगपद्येन जायेते। तदेतत् सकलमालोच्य भदन्तधर्म्मोत्तरेणेदमुक्तम्। न चाचावयवः क्रियावान्। अवयवेषु हि क्रियावत्सु विभागो जायते। क्रियाया विभागारम्भं प्रति निरपेक्षकारण-

त्वात् । तेन च संयोगेऽसमवायिकारणे निवर्त्तते निवर्त्ततावयवि द्रव्यमिति । इदमाहुरत्र कणादशिष्याः । नोदनादभिघाताद्वा जायमानः क्रियाविशेषो द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागारम्भको दृष्टः । अन्यस्तु विभागमात्रमारभते न तु यथोक्तविशेषं । अन्यस्मिन् पद्मसङ्कोचविकाशादिके कर्म्मण्यवयवसंयोगनिवृत्तेरदर्शनात् (४) तद्वत् प्रयत्नजन्यस्यापि कर्म्मणो नास्ति संयोगनिवर्त्तनसामर्थ्यं । ततो नास्ति द्रव्यनिवृत्तिरिति । अयमत्र समाधिः । इहावयविनि क्रियावति नियमेनावयवैरपि क्रियावद्भिर्भवितव्यं । अन्यथावयवसंस्पृष्टेभ्य आकाशदेशेभ्यो विभागोऽवयवासंस्पृष्टैश्च संयोगोवयविनः क्रियावतः स्यात् । अवयवास्तु क्रियाविरहिणः पूर्व्वाक्रान्तेभ्यो नभोदेशेभ्यो नापसर्य्येयुः । अवयविसमाक्रांन्तैश्च देशैर्नाभिसम्बध्येरन् । न चावयविसंयोगविभागाभ्यामवयवसंयोगविभागौ वाच्यौ । कार्य्यसंयोगविभागयोः कारणसंयोगविभागौ प्रति निमित्तभावानभ्युपगमात् । कारणसंयोगविभागावेव हि कार्य्यसंयोगविभागावारभेते ।

न च विपर्य्ययः सिद्धान्तहानिप्रसङ्गात् । तेनावयवावयविनां पृथग्देशत्वादाधार्य्याधारभावहानौ समवायोऽपि न व्यवतिष्ठेत । तस्मादवयविनि क्रियावति अव-

यथाः क्रियावन्त इत्यकामकैरपि वैशेषिकैरिदमभ्युपेयं। यथा चावयविक्रियायामवयवाः क्रियावन्त स्तथावयवेष्वपि क्रियावत्सु तदवयवैः क्रियावद्भिर्भाव्यमिति। अनया दिशा द्व्यणुके क्रियावति तदारम्भकौ परमाणू क्रियावन्तौ मन्तव्यौ।

अतश्चलावयवसम्बन्धिनश्चलाः परमाणवः। निःक्रियावयवसम्बन्धिनस्तु निःक्रिया। परमाणुक्रियायां तदारब्धमपि द्व्यणुकद्रव्यं क्रियावत् प्रसज्येत। सर्व्वावयवक्रियायाः कार्य्यक्रियाऽविनाभूतत्वात्। एकस्य परमाणोः क्रिया न परस्येति चेत्। सक्रियनिःक्रियौ तर्हि परमाणू परस्परं विभज्यमानावुज्झितद्रव्यारम्भकसंयोगौ स्यातां। ततश्च द्रव्यनाशः। एवञ्च द्व्यणुकद्रव्यस्य क्रियावत्त्वे त्र्यणुकेऽपि क्रिया स्यादित्यनेन क्रमेण परिदृश्यमानोऽचलश्चलः स्यादवयवः। तस्मान्निःक्रियावयवसम्बन्धिनो निःक्रियाः परमाणवश्चलावयवसम्बन्धिभ्यश्चलेभ्यो विभज्यमाना द्रव्यारम्भकसंयोगविनाशवन्तः स्युः। निरवयवो हि परमाणुर्यमणुमात्रनभोदेशमाक्रम्य परमाण्वन्तरेण संयुज्यते। ततो विभज्यमानः कथमनुज्झितपरमाण्वन्तरप्रत्यासत्तिकः स्यात्। सावयवो हि भाव एकेनावयवेन वस्त्वन्तरसंयुक्त एवावयवान्तरैश्चलैः।

पूर्व्वाक्रान्तान्नभोदेशान् विरहय्य देशान्तरमाक्रामेत्। निरवयवेषु त्वत्यन्तमस्तमितेयं कथेति युक्तं द्रव्यनाशप्रसङ्गमुत्पश्यामः।

अथवान्यथायं विरुद्धधर्म्मसंसर्गः। तथाह्यावृते एकस्मिन् पाण्यादौ स्थूलस्यार्थस्यावृतानावृते रूपे युगपद्भवन्तौ विरुद्धधर्म्मद्वयसंयो(५)गमस्यावेदयतः। न चानावृतैकरूप एवायमिति शक्यं वक्तुं। अर्द्धावरणेऽपि अनावृतस्य पूर्व्ववद्दर्शनप्रसङ्गात्। अवयवदर्शनायत्तोपलब्धेः। तद्दृष्टौ अस्या दृष्टिरिति चेत्। अदृष्टिरेव तर्हि अस्यास्तु। न तु दृष्ट्यदृष्टी। नन्वस्त्येवावयविदर्शनमवयवावरणेऽपीति कोऽयं प्रसङ्गः। एवन्तर्हि स्थूलः प्राग्वदुपलभ्येत। इदमत्राह कश्चित्। भूयोऽवयवेन्द्रियसन्निकर्षसहायोऽवयवीन्द्रियसन्निकर्षः स्थूलोपलब्धेर्निमित्तं, न चार्द्धावरणे भूयसामवयवानामस्तीन्द्रियसन्निकर्षः ततो न स्थूलग्रहणमिति। सोऽप्येवं प्रष्टव्यः। किं स्थूलो नामावयविनोऽन्यः। स एवानेकव्यापी स्थूलः। तच्च यद्यवयव्येव स्थूलः। तदा तद्ग्रहणे कथन्न स्थूलग्रहणमिति चिन्त्यम्।

अथ स्थूलत्वाख्यः परिमाणविशेषो गुणः स द्रव्यादन्य एवेति चेत्। एवन्तर्हि परिमाणरहितमेव तत् द्रव्यमुप-

लभ्यते । न त्वस्यान्येनान्येन परिमाणेन योगः । न चास्यानेकपरिमाणकल्पनापि साध्वी । युगपत् सर्व्वेषामनुपलब्धेः । न च दृश्यस्य दर्शननिवृत्तिर्युक्ता । अवयवस्यैव तत् परिमाणमुपलभ्यत इति चेत् । यद्येवं स एव तर्ह्यवयवः स्वेन परिमाणेन सम्बद्धः प्रत्यक्षोऽस्त्वावरणकालेनावयवी । स्यादेतदेकार्थसमवायाद्भ्रान्तिनिमित्तादवयव्येवावयवपरिमाणेन सम्बद्धः प्रतिभातीति तदपि न शोभनं । द्वयोः समपरिमाणयोरवयवावयविनोः प्रतिभासप्रसङ्गः । यस्य हि महतोऽवयवस्य तत परिमाणं स तावत् स्वेन परिमाणेन सम्बद्धः प्रतिभाति । अवयविनश्च तत्परिमाणसम्बद्धप्रतिभासाभ्युपगमे द्वयोः समपरिमाणयोरयवायविनोः प्रतिभास आसज्यते ।

न चास्ति यथोक्तः प्रतिभासः परिमाणरहितः । सोऽवयवः प्रतिभास इति चेत् । स्यादेतद्यस्यावयवस्य परिमाणेनावयवी सम्बद्धः प्रतिभाति स स्वं परिमाणं परित्यज्याभातीति । इदमपि परिमाणविरहिणोवयवस्यादृष्टेरशक्यं कल्पयितुं । एकार्थसमवायाच्च भ्रान्ति निमित्तादल्पतरावयवपरिमाणवानप्यवयवी प्रतिभासेत । न च, बाधकमन्तरेण भ्रान्तिरपि शक्या व्यवस्थापयितुम् ।

अस्ति तर्हि स्थूलोऽवयव एव प्रत्यक्षः । एवमावरण-काल इवानावरणावस्थायामपि स्थूलतरोऽवयवः प्रत्यक्षोऽस्तु । परमध्यवर्त्तिनामवयवानामिन्द्रियसन्निकर्षाभावे स्थूलतमावयविदर्शनानुपपत्तेः स्यान्मतं निखिलावयवदर्शनं न स्थूलप्रत्यक्षकारणं । किन्तु भूयोऽवयवदर्शनमिति । इदमपि न सम्यक् । अभिमुखावस्थितस्य हि पर्व्वतादेरर्व्वाचीनावयवदर्श(ई)नेन तथा स्थूलप्रतिपत्तिर्यथार्व्वाक्परमध्यवर्त्तिनां दर्शने । ततो न यावन्निरवशेषावयवदर्शनं तावत् कथं स्थूलतमार्थप्रतिपत्तिः स्यात् । न चावयवा अर्वाक्परमध्यवर्त्तिनो युगपद्दृश्यन्ते । तत् कथमवयवी स्थूलो दृश्येत । क्रमेण दिशामवयवानां प्रत्यक्षीकरणे प्रत्यक्षः स्थूलोऽवयवीति चेत् । अन्यदा तु कः प्रत्यक्षः इति विमृष्यं । अवयव इति चेत् । अवयवी अपि परमध्यवर्त्तिनो न युगपद्दृश्यन्त इति कथं सोऽपि प्रत्यक्षः स्यात् । तदेवं नावयवी नावयवाः प्रत्यक्षा इति न किञ्चिद्दृश्येतेति । तत् सिद्धमावृतानावृतरूपः स्थूलोऽर्थ इति ॥

तथा रागारागाभ्यां विरोधः सम्भावनीयः । तथा ह्येकस्मिन्नुक्ते स्थूलोऽर्थो रक्तारक्ते रूपे युगपत् प्रतिपद्यमानो विरुद्धरूपद्वययोगमात्मनः प्रकाशयति । नन्व-

वयव एव रक्तोऽवयवी त्वरक्तैकरूप एवेति। यद्येवं रक्ते-ऽवयवेऽरक्तरूपोऽवयवी दृश्येत। न चैवं। अथवा राग-द्रव्यसंयोगो हि रक्तत्वं। अवयवस्य च रागद्रव्येण संयोगे-ऽवयविनोऽपि तेन भाव्यं। अवश्यं हि कारणसंयोगिना कार्य्यमपि संयुज्यत इति समयात्। यस्त्वाह रक्त एवा-वयवी। अस्ति हि कुङ्कुमारक्ते पटावयवे कुङ्कुमारक्तः पट इति प्रत्ययः। ततो रागद्रव्यसंयुक्त एवावयवीति तस्यापि वर्णान्तरानवभासः स्यादवयविनः। रागद्रव्यं हि प्रत्यासीदत् निजरूपं वस्तुन स्तिरोधत्ते स्वेन च रूपेण द्रव्यं सम्बध्नाति। यथा रक्तोवयवस्तिरोहित-सहजरूपो रागद्रव्यसमवायिना रूपेण सम्बन्धी प्रति-भाति। अवयविन्यपि रागद्रव्यसंयोगिनि वर्णान्तरा-नवभासप्रसङ्गो दुर्व्वारः। तन्न रक्त एवावयवीति शक्यं वक्तुम्।

अन्यस्तु संयोगस्याव्याप्यवृत्त्या समाधत्ते। स ह्याह शब्द इवाव्याप्यवृत्तिः संयोगः। तेनैकार्थो रक्तश्चारक्त-श्चेति। सोऽप्येवं पर्य्यनुयोज्यः। कथमव्याप्यवृत्तिः। यदि हि स्वाश्रये समवेतो रूपादिवत् व्याप्यवृत्तिरेवायं। असमवेतश्चावृत्तिरेवाप्यद्रव्येष्विव गन्धः। एकच संयोगस्य भावाभावाव्यापिनो वृत्तिरिति चेत्। स्यादेतद्यथा विरु-

द्वावपि रूपरसावेकमाश्रयेते। तथा संयोगस्याप्येकत्र भावाभावौ युगपत् स्याताम्।

अहो मोहविजृम्भितं। अभावो हि भावनिवृत्तिरूपो नास्य भावनिवृत्तिं हित्वा रूपान्तरमीक्षते। यश्च यन्निवृत्तिरूपः स कथं तस्मिन् सत्येव भवति। भावे वा तन्निवृत्तिरूपतां जह्यात्। तथा ह्यनलं पश्यन्नपि सलिलार्थी तत्र प्रवर्त्तेत। जलविविक्तस्यानलस्य दर्शनात्। जलाभावसिद्धेरप्रवृत्तेरिति चेत्। भवत्वनुपलम्भाज्जलाभावसिद्धिस्तथापि ज(७)लसत्तां सम्भावयन् जलार्थी प्रवर्त्तेत। ननु तत्र यदि जलं स्यादुपलभ्येत किमतः। अतोऽनुपलम्भादभावो जलस्येति। यद्यप्यभ्युपगतैव जलाभावसिद्धिः। तथापि तदर्थिनस्तद्भावशङ्कया प्रवृत्तिः स्यात्। युगपदेकत्र संयोगस्य भावाभावौ दृश्येते। तेनैवं कल्पयामो न स्वेच्छया। ननु किमभावोभावप्रतिषेधात्मकः प्रतीयते। अन्यथा वा। तत्र भावनिवृत्तिरूपे ऽभावे सिद्धे कथं भावोपलब्धिर्न भ्रान्ता स्यात्। भावाप्रतिषेधात्मकश्च नाभावः। नाममात्रन्तु स्यात्। न च नाममात्रादर्थस्य तथाभावः। रूपरसयोस्तु न परस्परनिवृत्ती रूपमिति कथं तदुदाहरणमिह शोभेत। न च रूपरसयोरेकत्र समवायोऽस्माभिरनु-

मन्यते। शब्दोऽप्येवमेवाव्याप्यवृत्तिरसिद्धः स कथं प्रकृत-संशयनिवृत्तये कल्प्येतेति । अलं बहुभाषितया ॥

अथवा स्थूलोऽर्थस्तदतद्देशः प्रतीयते। तद्देशयोश्च परस्पराभावाव्यभिचारनिमित्तोऽस्ति विरोधः। अतो विरुद्धधर्मसंसर्गः स्थूलस्य। स्यादेतत् कथं तदतद्देशयोः परस्पराभावाव्यभिचारः। उच्यते। इह तावदेकस्मिन् देशे परिच्छिद्यमाने ताद्रूप्यप्रच्युतिरस्य व्यवच्छिद्यते। तदव्यवच्छेदे तत्परिच्छेदाभावप्रसक्तेः। प्रच्युतिवच्च प्रच्युतिमदपि देशान्तरं व्यवच्छिद्यते। यदि हि परि-च्छिद्यमानो देशान्तरस्वभावो भवेत्तदा तद्रूप एवो-पलब्धो भवेत्। देशान्तररूपन्तु विरहय्य स्वेन रूपेण प्रकाशमानो देशो देशान्तरासंसृष्ट इत्यवसीयते। यथा च देशस्य देशान्तरासंसर्गस्तथा तेनाधारभूतेन देशेन यद्व्याप्तं रूपं तदपि देशान्तरसंसर्गादविच्छिन्नं भवति। कथं हि तेन देशेन व्याप्तं रूपं तदभाववति देशान्तरे वर्त्तेत। यथा एकेन देशेन व्याप्तो घटो न देशान्तरे वर्त्तते। देशान्तरे ऽनुपलम्भादवृत्तिरिति चेत्। विप्रकृष्टे देशान्तरे कथमस्याभावः प्रतिपत्तव्यः। तस्मादि-दमकामकेनापि वाच्यं। यदुत एकदेशव्याप्तं रूपं न देशान्तरे वर्त्तते इति। तस्य तेन व्यापनप्रसङ्गात्।

तदभाववति देशान्तरे वर्त्तमानोऽपि तेन देशेन व्याप्येत । न च व्याप्तिरस्य शक्यावसातुं । भागान्तरासम्भवात् । एतेन तन्निरस्तं । यदाह कश्चित् । यथैकोभावस्तद्देशं जनयन्नविरुध्यत इति । तदपि न प्रज्ञतानुरूपम् ।

तथाहि भावाभावावेव परस्परपरिहारेण विरुद्धौ न वस्तुनी । वस्तुनोस्तु परस्पराभावाव्यभिचारेण विरोधः । तेन यदेव वस्तु वस्त्वन्तरप्रच्युतिमत् तदेव तेन विरुद्धं । न चैककार्य्यनिवर्त्तनशक्तिः कार्य्यान्तरशक्त्यभावाव्यभिचारिणी । अनुपलम्भो हि वस्तुनो वस्त्वन्तराभा(८)वाव्यभिचारं साधयति । एककार्य्यनिवर्त्तनशक्तिमति च रूपे गृह्यमाणे कार्य्यान्तर निवर्त्तनशक्तिरपि परिच्छिद्यत इति । कथं तदभावः । एकदेशसम्बद्धं तु रूपं देशान्तरसंसर्गिरूपपरिहारेणोपलभ्यमानन्तदभावाव्यभिचारि तेन विरुद्धं । यथात्यन्त सदृशोर्वस्तुनोर्युगपदुपलभ्यमानयोः सत्यपि चाकारभेदे दूरादनुपलक्ष्यमाणभेदयोर्देशभेदमात्रनिमित्तकं प्रत्यक्षावसितं विरोधमाश्रित्य भेदोऽवस्थाप्यते । यस्त्वाह । यथैकं चक्षुर्विज्ञानं भिन्नेषु चक्षुरादिषु वर्त्तते तदधीनोत्पादकतया । तथान्योऽपि भिन्नदेशनिवृत्तिर्न भेत्स्यत

इति। सोऽपि देशभेदनिमित्ते विरोधेऽवस्थाप्यमाने वस्तुनः कारणभेदनिमित्तं विरोधमासञ्जयन् न नैपुण्यमात्मनो निवेदयति। न हि विज्ञानस्य देशोऽस्ति कश्चित्। अमूर्त्तत्वात्। स्यादेतत्। यथा देशभेदनिमित्तो विरोधस्तथा कारणभेदनिमित्तोऽपि स्यात्। को हि वस्तुतो विशेषः, कारणभेदाद्देशभेदस्येति।

उक्तमिह। परस्पराभावाव्यभिचारनिमित्तो वस्तूनामस्ति विरोधः। स देशभेदेऽपि सन्निधीयेते न कारणभेदे। देशभेदवतो हि रूपेऽन्योऽन्यपरिहारेणोपलभ्यमाने। परस्पराभावाव्यभिचारिणी भवतो न कारणभेदवती। तदेवं कम्परागावरणभावाभावकृते देशभेदनिबन्धने च चतुर्थे विरुद्धधर्म्मसंसर्गेऽवयविविषये व्यवस्थापिते पक्षधर्म्मत्वं सिद्धं हेतोः। अधुनाव्याप्तिरेवास्य स्वसाध्येन समर्थनीया। इह विरुद्धधर्म्मसंसर्गविरहमात्रनिबन्धनो भेदव्यवहारो वस्तूनां दृष्टः, अहेतोरयोगात्। निमित्तान्तरस्य वाऽदर्शनात्। ततो विरुद्धधर्म्मसंसर्गेऽपि भवन्नभेदव्यवहारो व्यापकं निमित्तवत्त्वं जह्यात्। ततो व्यापकानुपलब्ध्या तस्माद्व्यावृत्तो विरुद्धधर्म्मविरहेण व्याप्यते। तद्विरुद्धश्च विरुद्धधर्म्मसंसर्गः। तेनेयं व्यापकविरुद्धोपलब्धिभूमिका। एवं

प्रसाधितेऽस्यास्त्रैरूप्येऽसिद्धविरुद्धानैकान्तिका दोषा नावकाशं लभन्ते इति ॥

एवं मया बहुषु दुर्म्मतिनिर्म्मितेषु
प्रत्युद्धृतेषु खलु दूषणकण्टकेषु ।
आचार्य्यनीतिपथ एव विशोधितोऽय-
मुत्सार्य्यमत्सरमनेन जनः प्रयातु ॥

समाप्तञ्चेदमवयविनिराकरणमिति ॥

पण्डिताशोकविरचिता

# सामान्यदूषणदिक्प्रसारिता।

व्यापकन्नित्यमेकञ्च सामान्यं यैः प्रकल्पितं।
मोहग्रन्थिच्छिदे तेषां तदभावः प्रसाध्यते॥

कथमिदमवगम्यते। परस्परविलक्षणाक्षणेषु प्रत्यक्ष-समीक्ष्यमाणेष्वभिन्नधीर्ध्वनिप्रसवनिबन्धनमनुयायिरूपं सामान्यं न मान्यं मनीषिणामिति। साधकप्रमाण-विरहात् बाधक(९)प्रमाणसम्भवाच्चेति ब्रूमः। तथाहि यदिदं सामान्यसाधनमनुमानमभिधीयते परैः। यदनु-गताकारं ज्ञानं तदनुगतवस्तुनिबन्धनं यथा बहुषु पुष्पेषु स्रक् स्रगिति ज्ञानं। अस्ति च परस्परसम्पर्क-विकलकलासु कार्य्यादिव्यक्तिष्वनुगताकारं विज्ञानं तदनैकान्तिकतादोषाक्रान्तशरीरत्वान्न तद्भावसाधना-यालं। यतो भवति बहुषु पाचकेषु पाचकः पाचक इति एकाकारपरामर्शप्रत्ययः। न च तेष्वनुगतमेकं वस्तु समस्ति। तद्भावे हि प्रागेव तथाविधप्रत्ययोत्पाद-प्रसङ्गो दुर्व्वारप्रचारः। क्रियोपकारापेक्षाणां स्वलक्ष-

णानां सामान्यव्यञ्जकत्वादयमदोष इति चेत्। नैतदस्ति। नित्यानामनाधेयातिशयतयाऽनुपकारिणि सहकारिण्यपेक्षाऽयोगात्। सातिशयत्वे वा प्रतिक्षणं विशरारुशरीरत्वात् क्रिया कुत इति दोषोदुष्परिहरः। क्रियानिबन्धनत्वात् पाचकेष्वनुगताकारप्रत्ययस्य नानैकान्तिकतादोष इत्यपि वार्त्तं। प्रतिभेदं भिद्यमानानां कर्म्मणां तन्निबन्धनत्वायोगात्। भिन्नानामप्यभिन्नाकारज्ञाननिबन्धनत्वे व्यक्तीनामपि तथा भावो न राजदण्डनिवारितः। ततश्च सामान्यमेव नोपेयं स्यात्। इति मूलहरं पक्षमाश्रयता देवानांप्रियेण सुष्ठु अनुकूलमाचरितं। अनेनैव न्यायेन क्रियाकारकसम्बन्धमभिन्नज्ञाननिबन्धनमुपकल्पयन् प्रतिक्षिप्तः। पाकक्रियात्वनिबन्धनः पाचकेष्वनुगताकारः प्रत्ययस्ततो नानैकान्तिकतादोष इत्यपि न मन्तव्यं। नह्यर्थान्तरसम्बन्धिनी जातिरर्थान्तरप्रत्ययोत्पत्तिहेतुः, अतिप्रसङ्गात्। स्यादेतत् समवेतसमवायसम्बन्धबलात् पाकक्रियासामान्यं पाचकेष्वभिन्नाकारं परामर्शप्रत्ययमुपजनयति ततो न यथोक्तदोषः। तदिदमप्यसारं। यत् उदयानन्तरापवर्ज्जितया कर्म्मणामेवासम्भवात्, विनष्टे कर्म्मणि तत् सामान्यं न कर्म्मणि तदभावादेव नापि

कर्त्तरीति सम्बद्धसम्बन्धोप्यस्य नास्तीति नाभिन्नप्रत्यय-हेतुः। तस्मात् स्थितमेतत्तदनैकान्तिकतादोषदुष्ट-त्वान्नेदमनुमानं सामान्यसत्त्वासाधनाय पर्य्याप्तमिति। इतश्चापि न सामान्यसत्त्वासाधनमिदमनुमानं। यथैव हि परस्परासङ्कीर्णस्वभावा अपि शाबलेयादयोभावाः कयाचिदेव तदेककार्य्यप्रतिनियमलक्षणया स्वहेतु-बलायातया प्रकृत्या तदेकमभिमतमनुगतरूपमुप-कुर्व्वते, तदपरसामान्यान्तरमन्तरेणान्यथानवस्थाप्रस-ङ्गात्। तथा तमेकं परामर्शप्रत्ययमुपजनयन्तु किमन्त-रालगडुना व्यतिरेकवता सामान्येनोपगतेन।

अथोच्यते प्रतिनियतशक्तयः सर्व्वभावाः। एतच्च सामान्यापलापिभिरपि (१०) नियतमभ्युपगमनीयं। अन्यथा कुतः शालिवीजं शाल्यङ्कुरमेव जनयति न कोद्रवाङ्कुरमिति। परपर्य्यनुयोगे भावप्रकृतिं मुक्ता किमपरमिह वचनीयमस्ति। एतच्चोत्तरमस्माकमपि न वनौकःकुलकवलितं, तथाहि वयमप्येवं शक्ता एव वक्तुं सामान्यमेवोपकर्त्तुं शक्तिव्यक्तीनां भेदाविशेषेऽपि न तदेकं विज्ञानमुपजनयितुमिति। अनुत्तरं वत दोष-सङ्कटमत्रभवान् दृष्टिदोषेण प्रविश्यमानोऽपि नात्मान-मात्मना सम्वेदयते। तथाहि शालिवीजतदङ्कुरयोर-

ध्यक्षानुपलम्भनिबन्धने कार्य्यकारणभावेऽवगते शालि-बीजं शाल्यङ्कुरं जनयितुं शक्तं न कोद्रवाङ्कुरमिति शक्यमभिधातुं। नैवं सामान्यतद्वतोरुपकार्य्योपकारक-भावः कुतश्चन प्रमाणान्निश्चितः। तत्कथमिदमुत्तर-मभिधीयमानमाद्धीत साधिमानमित्यलमलीकाभिन्ब-न्धनेन। न साधकप्रमाणविरहमात्रेण प्रेक्षावतामसद्व्यव-हारः। ततस्तदभावसाधकमनुमानमभिधीयमानमस्मा-भिराकल्यतां। यद्यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते तत्तदसदिति प्रेक्षावद्भिर्व्यवहर्त्तव्यं, यथाम्बराम्बुरुहं, नोपलभ्यते चोपलब्धिलक्षणप्राप्तं सामान्यं क्वचिद-पीति स्वभावानुपलब्धिः। न चासिद्धिदोषोद्भाव-नया प्रत्यवस्थातव्यम्। तथा ह्यसिद्धिर्भवन्ती स्वरू-पतो विशेषणतो वा भवेत्। तत्र न तावदाद्यं सम्भ-वति। अन्योपलम्भरूपस्यानुपलम्भस्याभ्युपगमात्। तस्य च स्वसम्वेदनप्रत्यक्षसाक्षात्कृतस्वरूपत्वात् कुतः स्वरू-पासिद्धदोषावकाशः।

अथोच्यते स्वसम्वेदनमेव न सम्भवति। स्वात्मनि क्रियाविरोधात्। न हि तयैवासिधारया सैवासिधारा च्छिद्यते। तदेवाङ्गुल्यग्रं तेनैवाङ्गुल्यग्रेण स्पृश्यते इति। अतोऽसिद्ध एवायं हेतुः। तदिदं स्वसम्वेदनशब्दार्था-

परिज्ञानविजृम्भितमेव प्रकटयति वावः। तथाहि कलस-कलधौतकुवलयादिभ्यो व्यावृत्तं विज्ञानमुपजायते। तेन बोधरूपतयोत्पत्तिरेवास्य स्वसम्बित्तिरुच्यते, प्रकाशवत्। न कर्म्मकर्त्तृक्रियाभावात्। एकस्यानंशरूपस्य त्रैरूप्यानुपपत्तितः। यथैव हि प्रकाशकान्तरनिरपेक्षः प्रकाशः प्रकाशमान आत्मनः प्रकाशक उच्यते। तथा ज्ञानमपि ज्ञानान्तरनिरपेक्षं प्रकाशमानमात्मनः प्रकाशमुच्यते। ततोऽयं परमार्थः। न ज्ञानं ज्ञानान्तरसंवेद्यमुपपद्यते नाप्यसम्बिदितमुच्यते। यथाप्रकारे च स्वसम्बेदनशब्दार्थं विवक्षिते न किञ्चिद् वचनीयकमस्ति कुतो यथोक्तदोषावसरः। नापि विशेषणासिद्धाऽसिद्धिरुद्भावनीया। उपलब्धिलक्षणप्राप्ततया (११) सामान्यस्य स्वयमेव परैरुपगमात्। तथानभ्युपगमे वा न सामान्यबलेन वा कुलेयादिष्वनुगताकारौ धीध्वनी स्यातां। न हि यतो यत्र ज्ञानाभिधानप्रवृत्तिस्तदनुपलक्षणे तस्य प्रतीतिर्भवति, दण्डिवत्। यत् पुनरिदमुद्योतितमुद्योतकरेण। किं सामान्यं प्रतिपद्यसे, न वा। यदि प्रतिपद्यसे कथमपह्नुषे। अथ न प्रतिपद्यसे तदा तस्यासिद्धत्वादाश्रयासिद्धो हेतुः। तदिदं तस्य धर्म्मिस्वरूपितानभिज्ञताविजृम्भितमाभाति। यतो न

वयं वह्नीरूपतया सामान्यं धर्म्मितयाऽङ्गीकुर्म्महे । अन्तर्म्माचाभिनिवेशिनो भावाभावोभयानुभवाहितवासनापरिपाकप्रभवस्याध्यस्तवहिर्वस्तुनो ज्ञानाकारस्य धर्म्मितयोपयोगात् ।

स च स्वसम्वेदनप्रत्यक्षसिद्धतया न शक्यः प्रतिक्षेप्तुं । तदच धर्म्मिणि व्यवस्थिताः सदसत्त्वे चिन्तयन्ति । किमयं सामान्यशब्दविकल्पप्रतिभासार्थो धर्म्मौ परपरिकल्पितवहिःसामान्यनिबन्धनो वेति । तस्य वाह्यानुपादानत्वे साध्यतयाऽनुपलम्भो हेतुः । न पुनस्तस्यैवाभावः साध्यते । तद्विषयशब्दप्रयोगप्रसङ्गात् ।' एवम्बिधे च धर्म्मिणि विवक्षिते कुत आश्रयासिद्धिदोषः । यत्तूच्यते । प्रत्यक्षप्रमाणसिद्धस्वभावतया सामान्यस्यासिद्ध एवायं हेतुरिति । तदयुक्तं, तस्य स्वरूपेणाप्रतिभासनात् ।

इदमेव हि प्रत्यक्षस्य प्रत्यक्षत्वं यत् स्वरूपस्य स्वबुद्धौ समर्पणं । इदं पुनर्मूल्यादानक्रयि सामान्यं स्वरूपञ्च नादर्शयति प्रत्यक्षताञ्च स्वीकर्त्तुमिच्छति । तथाहि न वयं परस्परासंकीर्णशावलेयादिव्यक्तिभेदप्रतिभासनवेलायां तद्विलक्षणमपरमनुगतमध्यक्षेणेक्षामहे । कण्ठेशनमिव भूतेषु । शावलेयसामान्यबुद्धेरसिद्धेः । तत् कथमदृष्टकल्पनयात्मानमात्मना विप्रलभेमहि ।

इति नासिद्धो हेतुः। नाप्यनैकान्तिकता शङ्काविषयमतिपतति, विपक्षवृत्त्यदर्शनात्। असपक्षे सम्भवानुपलम्भात्। साधारणानैकान्तिकता माभूत। सन्दिग्धविपक्षव्यावृत्तिकता तु प्रतिबन्धादर्शनादनिवारितप्रसरैव।

तदेतन्न समालोचिततर्ककर्कशधियामभिधानं। विपर्य्यये बाधकप्रमाणसामर्थ्यादपसारितसद्भावत्वात्तदाशङ्कायाः। तथाह्यसत्त्वे साध्ये सत्त्वं विपक्षः। तच्च प्रत्यक्षवृत्त्या भवितव्यं। यतो यद्यदाऽविकलाऽप्रतिहतसामर्थ्यं तत्तदा भवत्येव। तद्यथाऽविकलबलसकलकारणकलापोऽङ्कुरः। सति च चक्षुरादिसाकल्ये दृश्ये वस्तुन्यविकलाप्रतिबद्धशक्तिकारणं प्रत्यक्षं ज्ञानमिति स्वभावहेतुः। ततो विरुद्धोपलम्भाद्विपक्षाद्व्यावर्त्तमानो हेतुः। असद्व्यवहारयोग्यत्वेन व्याप्यत इति व्याप्तिसिद्धेर्नानैकान्तिकः। अभिमतसाध्य( १२ )प्रतिबन्धसिद्धेस्तु विरुद्धता दूरतरसमुत्सारितरभसप्रसरैव। अतोऽसिद्धतादिदूषणशङ्काकलङ्कालङ्कि( क्र )ताद्धेतोः प्रस्तुतवस्तुसिद्धौ सिद्धमसत्त्वं सामान्यस्येत्यलमतिबद्धविस्तरविसारिण्या कथयेति विरम्यते।

न च वस्तुसंस्थानवत् सामान्यं व्यक्तेर्लक्षणं। न

चानुवृत्तव्यावृत्तवर्णाद्यात्मके जातिव्यक्ती वर्णादिनियत-प्रतिभासप्रतीतिप्रसङ्गात्। व्यक्तेरेवासौ प्रतिभास इति चेत् कोऽपरस्तर्हि सामान्यस्यानुगताकार इति चेत्।

ननु वर्णसंस्थाने विरहय्य किमपरमनुगामि विद्यते। जातिव्यक्त्योः समवायबलादविभावितविभागयोः क्षीरोदकयोरिव परस्परमिश्रणेन प्रतिपत्तेरिति चेत्। न तर्हि सामान्यविशेषयोरेकतरस्यापि रूपं गृहीतं। स्वरूपाग्रहणेऽनयोरप्यग्रहणमिति निरालम्बनैव सा तादृशी प्रतिपत्तिरिति परमार्थ आवेदितस्तावत्‌निरालम्बनया च प्रतीत्या व्यवस्थाप्यमानं सामान्यं सुव्यवस्थापितं। तस्माद्विशेष्यासिद्ध्यापि नायमसिद्धो हेतुः। सपक्षे वर्त्तमानो विरुद्ध इत्यपि न मन्तव्यः। अनैकान्तिकताप्यस्य न सम्भावनाम् अर्हति। असद्व्यवहारानपेक्षत्वेन हि दृश्यानुपलम्भो व्याप्तः। यदि हि सन्नपि तत्र न प्रवर्त्तयेत्। इह सापेक्षः स्यात्। ततो विपक्षाद्व्यापकविरुद्धावरुद्धात्। व्यावर्त्तमानोऽसद्व्यवहारे विश्राम्यतीति अतस्तेनासद्व्यवहारेणानुपलम्भो व्याप्यत इति कुतोऽनेकान्तः। ततश्च स एवार्थः समायातः।

एतासु पञ्चस्ववभासनीषु
प्रत्यक्षबोधे स्फुटमङ्गुरीषु।

साधारणं षष्ठमिहेक्षते यः
शृङ्गं शिरस्यात्मन ईक्षते सः ॥ इति ॥

सर्व्वस्य च पूर्व्वोक्तस्यायं परमार्थः ।

प्रत्यक्षप्रतिभासि वर्त्म न पञ्चस्वङ्गुलीषु स्थितं
सामान्यं प्रतिभासते न च विकल्पाकारबुद्धौ तथा ।
ता एवास्फुटमूर्त्तयोच हि विभासन्ते न जातिस्ततः
सादृश्यभ्रमकारणौ पुनरिमावेकोपलब्धिध्वनी इति ॥

सामान्यसिद्धिदूषणदिक्प्रसारिता ॥ ३ ॥

कृतिरियं पण्डिताशोकस्य ॥ ० ॥

# अन्तर्व्याप्तिसमर्थनम्।

ॐ नमो बुद्धाय।

इह सत्त्वमर्थक्रियाकारित्वं तदितरसत्त्वलक्षणायोगात्। तच्च क्रमयौगपद्याभ्यां व्याप्तं परस्परव्यवच्छेदलक्षणत्वादनयोः। प्रकारान्तरेण करणासम्भवात्। क्रमयौगपद्ये चाक्षणिकत्वे न स्तः। पूर्व्वापरकालयोरविचलितैकस्वभावस्य कर्त्तृत्वाकर्त्तृत्वे विरुद्धधर्म्मद्वयायोगात्।

तच्च न तावत् क्रमः क्रमाणामेकैकं प्रति पूर्वापरकालयोः कर्त्तृत्वाकर्त्तृत्वापत्तेः। एवं सर्व्वक्रमाभावात् केवलं सकलकार्य्ययौगपद्यमवशिष्यते। तत्र च स्फुटतरः पूर्व्वापरकालयोः कर्त्तृत्वाकर्त्तृत्वप्रसङ्गः। विरुद्धे च कर्त्तृत्वाकर्त्तृत्वे एकधर्म्मिणि न सम्भवतः। एकस्वभावश्च तावत्कालमक्षणिक इति सिद्ध एतस्मिन् क्रमयौगपद्ययोरयोगः। तदेवमक्षणिके व्यापकानुपलब्ध्या निषिद्धं सत्त्वं क्षणिक एवा[व]तिष्ठते इति क्षणिकत्वेन व्याप्तं। तत्तेन व्याप्तं यत् यच्च धर्म्मिणि सिध्यति तच्च क्षणिकत्वं प्रसाधयति। इदमेवेदानीं

विचार्य्यते। केयं (क्वेयं) व्याप्तिर्ग्रहीतव्या दृष्टान्तधर्म्मिणि साध्यधर्म्मिणि वा। केचिदाहुः। दृष्टान्तधर्म्मिण्येव धूमवत्। अन्यथा साधनवैफल्यं स्यात्। उभयधर्म्मसिद्धि(द्धे)रनान्तरीयकत्वात् व्याप्तिसिद्धेः। नहि महानससिद्धायामग्निधूमयोर्व्याप्तौ पुनरग्निसिद्धये धूमलिङ्गमन्विष्यत इति। तथाहि।

दृष्टान्ते गृह्यते व्याप्तिर्धर्म्मयोस्तत्र दृष्टयोः।
हेतुमात्रस्य दृष्टस्य व्याप्तिः पक्षे तु गम्यते॥
सा च सर्व्वोपसंहारात् सामान्यमवलम्बते।
तस्य धर्म्मिणि वृत्तिस्तु प्रतीयेतानुमानतः॥

प्रत्यक्षदृष्टयोर्वह्निधूमयोः कार्य्यकारणभावसिद्धौ तयोर्व्याप्तिसिद्धिरिति प्रत्यक्षसिद्धे वह्नौ युक्तमनुमानवैफल्यम्। नैवं व्याप्तिसिद्धेः प्राक् प्रमाणान्तरसिद्धं धर्म्मिणि क्षणिकत्वम्। साधनधर्म्ममेव तु केवलमनुपश्यन्तो विपर्य्यये बाधकप्रमाणबलात्तस्य क्षणिकत्वेन व्याप्तिं प्रतीमः। तत्ततः साधनवैफल्यम्। वैफल्यमेव, क्षणिकत्वव्याप्तस्य सत्त्वस्य तथात्वेन धर्म्मिणि प्रतीतौ क्षणिकत्वस्यापि प्रतीतेरिति चेत्। न। सर्व्वोपसंहारवती हि व्याप्तिः साध्यसिद्धेरङ्गम्। तदियमनपेक्षितधर्म्मिविशेषं साधनधर्म्ममात्रमवलम्बते। तद्यथा।

यत्र धूमस्तत्राग्निरिति। न पुनर्यत्र महानसे धूमस्तत्राग्निरिति। एवमिहापि यत् सत्तत् क्षणिकमिति व्याप्तिप्रतीतौ साधनधर्म्मस्यापि धर्म्मिणि सत्त्वं नान्तर्भवति। किं पुनः साध्यधर्म्मस्य। तस्मात् सत्त्वसामान्यस्य साधनधर्म्मस्य पक्षधर्म्मत्वं व्याप्तिश्चैकशः प्रतिपाद्य तदुभयसामर्थ्यात् साध्यधर्म्मस्य धर्म्मिणि वृत्तिः प्रतीयत इति कुतोऽनुमानवैफल्यं। यद्येवं व्याप्तिप्रतीतावसति धर्म्मिणि परामर्शे साध्यधर्म्मिणि व्याप्तिग्रहणमिति। कुतः। तत्र दृष्टस्य सत्त्वस्य व्याप्तिप्रतीतेः। यथा महानसदृष्टाग्निधूमयोर्व्याप्तिग्रहे दृष्टान्तधर्म्मिणि व्याप्तिग्रहणमुच्यते। न हि व्याप्तिग्रहणे महानसपरामर्शोऽस्तीत्युक्तं। ननु व्याप्तिपक्षधर्म्मत्वयोरेकशः प्रतीतावपि यस्यैव पक्षधर्म्मत्वमवगतन्तस्यैव साध्येन व्याप्तिरवसितेति सामर्थ्यात् साध्यसत्ताकथनमवैयर्थ्यं साधनस्य।

ननु न पक्षधर्म्मत्वगतिः साध्यगतिः साध्यधर्म्मसंस्पर्शात्। नापि व्याप्तिप्रतीतिरेव साध्यसिद्धिः। सामान्यालम्बनतया धर्म्मिविशेषेण धर्म्मयोरनवच्छेदात्। अन्यथा विशेषयोर्व्याप्तिप्रसङ्गात् तदयं व्यस्तविषयः सामर्थ्यादिति हेतुनिर्द्देशः। अथ हेतोस्त्रैरूप्यपरिच्छेदसामर्थ्यात् साध्यप्रतीतिरुत्पद्यत इत्युच्यते। न

तर्हीदानीं व्यर्थो हेतुः। स्वरूपनिश्चयेन साध्यनिश्चयोपजननात्। न हि क्वचिदियत्ताधिकं लिङ्गस्य कर्त्तव्यमस्तीति।

अपि च गृहीते पक्षधर्म्मत्वे सम्बन्धे च स्मृते अनुमानं भवद्भिरिष्यते। तद्वदन्तर्व्याप्तावपीष्यतां। न हि बहिर्व्याप्तिवादिनामपि विस्मृतायां व्याप्तौ अनुमानप्रवृत्तिरस्ति। तत्र यस्यैव पक्षधर्म्मत्वमवगतं तस्यैव साध्यधर्म्मेण व्याप्तिस्मृतेः किन्न सर्व्वानुमानवैयर्थ्यं। साध्यधर्म्मिणोऽपरामर्शेण व्याप्तेः स्मरणादिति चेत्। साध्यधर्म्मिणि दृष्टस्यैव व्याप्तिस्मरणे कथं साध्यधर्म्मिणोऽपरामर्शः। सामान्यालम्बनत्वाद्व्याप्तेः। साध्यधर्म्मिणोऽनवच्छेदादिति चेत्। ननु तत्र दृष्टस्य कथं तेनानवच्छेदः। तेनावच्छिन्नस्य वा असाधारणत्वात् कथं व्याप्तिः। अयोगव्यवच्छेदेन विशेषणान्नासाधारणतेति चेत् तथापि किन्न साध्यधर्म्मी परामृश्यते। यत्र यत्र पर्व्वते धूमस्तत्र तत्राग्निर्यथा महानस इति सामान्यालम्बनायां व्याप्तौ धर्म्मिविशेषपरामर्शस्यानङ्गत्वादिति चेत् युक्तमेतत् साध्यधर्म्मिणा ह्ययोगव्यवच्छेदः साधनधर्म्मस्य रूपान्तरमेव पक्षधर्म्मत्वाख्यं। न त्वयं व्याप्तेरङ्गं। तमन्तरेणापि व्याप्तेः सामान्यालम्बनायाः परि-

च्छेदपरिसमाप्तेः कथमन्यथा दृष्टान्तधर्म्मिणि व्याप्तिग्रहणवार्त्तापि तदेदानीं पक्षधर्म्मत्वायोगात् पक्षधर्म्मत्वाग्रहणात्; पक्षधर्म्मत्वग्रहणे वा तदैव साध्यमपि सामर्थ्यादसिद्धं सिद्धमिति सर्व्वानुमानवैयर्थ्यप्रसङ्गः। पश्चात्कालभाविलिङ्गज्ञानमपि च स्मृतिरेव स्यात् न प्रमाणं। तस्मात् व्याप्तेरनङ्गत्वात् पक्षधर्म्मत्वं व्याप्तिग्रहणे सदपि नान्तर्भवतीति पृथग्गृहीतस्मृतयोः पक्षधर्म्मत्वव्याप्त्योः सामर्थ्यादनुमेयगतिरुत्पद्यते इति। एवमवैयर्थ्यं साधनानामेषितव्यम् इति मानफलत्वात्। तद्वत् पृथग्भूतयोः पक्षधर्म्मत्वव्याप्त्योः सामर्थ्यादनुमानोत्पत्तिरन्तर्व्याप्तावपि किन्नेष्यते। तदिष्टौ वा कथं साधनवैयर्थ्यं। त्रैरूप्यगतिसामर्थ्यादनुमेयगतिरिति हि तदुपादानशक्तिरेव सामर्थ्यमुच्यते, न तु त्रैरूप्यप्रतीतेरन्तर्भाव इति सर्व्वं समानं। न सर्व्वं समानं। अन्तर्व्याप्तौ हि व्याप्तिं प्रति गत्यैव पक्षधर्म्मत्वमवगतं अनवगते पक्षधर्म्मत्वे व्याप्तेरप्यनवगतेः। ततो व्याप्तिपूर्व्वके साधनवाक्ये पक्षधर्म्मवचनमनर्थकमनन्तव्याप्तौ। नैवं बहिर्व्याप्तौ बहिरेव व्याप्तिग्रहणात्। अत्राह,—

"येन तेन क्रमेणार्थे प्रयुक्ते साधने सति।

अवेत्य पक्षधर्म्मत्वं पश्चाद्व्याप्तिः प्रतीयते ॥
प्रत्यक्ष इवं दृष्टान्ते तत्र सेत्यन्यथा कथं ।
द्वौ दृष्टा विद्म इति चेद् व्याप्तेः प्राक् द्वयदृक् कथं ॥"

व्याप्तिपक्षधर्म्मत्वे हि स्ववाक्याभ्यां येन तेन प्रयुक्ताभ्यां सूच्येते न तु साक्षात् प्रतीयेते। वाचः स्वयमप्रमाणत्वात्। यदाह,—

शक्तस्य सूचकं हेतुवंचोऽशक्तमपि स्वयमिति।

सूचितयोस्तु तयोः सत्त्वे हेतौ प्रथमतरपक्षधर्म्मत्वविषयमेव प्रमाणमभिमुखीभवतु। तेन प्रमाणेन धर्म्मिणि सिद्धस्य सत्त्वस्य पश्चाद्व्याप्तिः प्रमाणान्तरेण गृह्यत इति कस्य वैयर्थ्यमिति। प्रत्यक्षेऽपि दृष्टान्तधर्म्मिणि प्रथमं हेतुर्गृह्यते पश्चाद्व्याप्तिरित्येष एव क्रमः अन्यथा दृष्टान्तधर्म्मिणि व्याप्तिर्गृहीतेत्येतदेव न स्यात्। दृष्टान्तधर्म्मिण्यदृष्टस्यैव हेतोर्व्याप्तिग्रहणात्। यद्येवं साध्यधर्म्मोऽपि व्याप्तिग्रहणाधिकरणे धर्म्मिणि ग्रहीतव्य एव यथा वह्निधूमयोरिति चेत्। न। तत्र दृष्टस्य हेतोर्विपक्षे बाधकवृत्तिमात्रादेव व्याप्तिसिद्धेः। ज्ञातश्चैवं न खलु व्याप्तिग्रहणात् प्राक् क्षणिकस्य क्वचिदपि सिद्धिरस्ति तस्यानुमेयत्वात्। असिद्धायाञ्च व्याप्तावनुमानाप्रवृत्तेः। साधनान्तरस्य च तदर्थमननु-

सरणात् । अनुसरणेऽप्यनवस्था स्यात् । अवस्थाने तावत् प्रयासस्य वैयर्थ्यात् । विपर्य्यये व्याप्तिबलादेव व्याप्तिसिद्धेरविघातात् । वह्निधूमयोस्तु नादृष्टयोः कार्य्यकारणभावसिद्धिः । तत्सिद्धौ न विपक्षे बाधकवृत्तिरिति द्वयदर्शनव्यपेक्षा । वह्निधूमयोर्व्याप्तिसिद्धिः सत्त्वक्षणिकत्वयोस्तु नैवं । यथोक्तन्यायेन व्याप्तिसिद्धेः । तस्मात् सत्त्वमात्रस्य तत्र धर्म्मिणि सिद्धस्य बाधकवशाद्व्याप्तिः सेत्स्यतीत्येषितव्यं । तद्वदन्तर्व्याप्तावपि । ते इमे व्याप्तिपक्षधर्म्मत्वे स्वस्वप्रमाणव्यवच्छेद्यसाधनवाक्ये न तु केवलं सूचयितव्ये । न चान्यतरवाक्येन शक्यमुभयं सूचयितुमिति कुतोऽन्यतरवाक्यवैयर्थ्यं ॥

एकस्यैव हि धर्म्मस्य क्रमात्त्रैरूप्यनिश्चयः ।
विस्मृतावनुमाभावात् तत् किं व्यर्थानुमाखिलेति ॥

अपि च संग्रहश्लोकः,—

बाधकात् साध्यसिद्धिश्चेद्व्यर्थो हेत्वन्तरग्रहः ।
बाधकात्तदसिद्धिश्चेद्व्यर्थो धर्म्म्यन्तरग्रहः ॥

यदि हि धर्म्मिणि व्याप्तिः सिध्यन्त्येव साध्यसिद्धिमन्तर्भावयति । ननु लाभ एवैषः । व्याप्तिप्रसाधकादेव प्रमाणात् साध्यसिद्धेः सत्त्वहेत्वपाश्रयणप्रयासस्य

निरसनात्। न हि व्यसनमेवैतल्लिङ्गान्तरानुसरणं नाम। अथ न व्याप्तिसाधकात् साध्यसिद्धिः। न तर्ह्यन्तर्व्याप्तौ हेतुवैयर्थ्यमिति किमकाण्डकातरतया बहुतरमायासमाविशसि। द्वयं हि भवतः साध्यं दृष्टान्तधर्म्मिणि वृत्तिः साध्यधर्म्मिणि च। यथाक्रमं व्याप्तिपक्षधर्म्मत्वयोः सिद्ध्यर्थं। ननु यदा प्रतिनियते धर्म्मिणि विवादः, तद्बहिर्भूते च धर्म्मिणि व्याप्तिग्रहणं तदानीं भवेद्वैयर्थ्यं। यदा तु वस्तुमात्रे विवादः तदा सर्व्ववस्तुषु हेतोर्वृत्तिस्त्वयापि साध्या मयापि चेति कतमस्मिन् धर्म्मिणि हेतोर्वृत्तिसाधनं मम व्यर्थं भविष्यति। कथमिदानीं बहिर्व्याप्तिर्विवादाधिकरणं भूत एवान्यतमस्मिन् व्याप्तिसाधनात्। तावन्मात्रलक्षणत्वाच्च साध्यधर्म्मिणः। बाधकं प्रमाणं प्रवर्त्तमानमन्तर्गतमपि धर्म्मिणं बहिष्करोतीति चेत् एतदेव कथं भवतु बाधकेन प्रवर्त्तमानेनैव तस्मिन् साध्यसाधनात्। साध्यसंशयोपगमे साध्यधर्म्मिणि लक्षणोपगमादिति चेत् अयुक्तमेतत्। बाधकमात्रात् न साध्यसिद्धिरित्यस्मिन्पक्षे धर्म्म्यन्तरपरिग्रहवैयर्थ्याभिधानात्। बाधकात् साध्यसिद्धिरित्यस्मिंस्तु पक्षे साधनवैयर्थ्यमापादितं। तस्माद्बाधकमात्रेण साध्यासिद्धौ न क्वचित् सन्देहनिवृत्तिः। सन्दे-

हानिवृत्तौ न बहिष्करणमबहिष्कृतश्च साध्यधर्म्म्येवेति तत्र व्याप्तिरन्तर्व्याप्तिरेव नेदानीं बहिर्व्याप्तेर्वार्त्तापि। तदियं बहिर्व्याप्तिरमुस्मिन् पक्षे कथं भवति यदि प्रतिनियते धर्म्मिणि विवादः। तद्बहिर्भूते च धर्म्मिणि व्याप्तिग्रहणम्भवति। तत्र च दुरुद्धरः धर्म्म्यन्तरपरिग्रहवैयर्थ्यदोषः। बाधकमात्रेण तु साध्यसिद्धौ हेत्वन्तरमेव व्यर्थं। अपि च सत्वहेतोर्विशेषेण न बहिर्व्याप्तिसम्भवः।

असिद्धे धर्म्मिणः सत्त्वे विवादानवतारतः।
तत्रासिद्धस्य च व्याप्तिग्रहणे साध्यधर्म्मिणि॥
व्याप्तिग्रहः कथं नस्याद्दृष्टान्तेऽपि न वा भवेत्॥

यत्र हि धर्म्मिणि दृष्टस्य हेतोर्व्याप्तिः प्रतीयते तत्र तस्य व्याप्तिग्रहणमाख्यायते। दृष्टञ्च साध्यधर्म्मिणि सत्त्वमन्यथा विमत्ययोगादिति कथं नान्तर्व्याप्तिः।

तथापि साधनवैयर्थ्यनिषेधाय बहिरेव गृह्णीम इति चेत् तत् किमिदानीं त्वदिच्छानुरोधात् धर्म्मिणि हेतोर्दर्शनमदर्शनमस्तु। दर्शनविशेषे वा बहिरेव व्याप्तिग्रहणव्यवस्थास्तु। उभयत्र दृष्टस्य व्याप्तिग्रहणेऽप्यस्ति बहिर्व्याप्तिभाग इति चेत्। ननु किमर्थमियान् भागो यत्नेन संरक्ष्यते।

माभूत् हेतुवैयर्थ्यमिति चेत् । ननु यदि बाधकवृत्तिमात्रेण व्याप्तिग्रहणाधिकरणे धर्म्मिणि साध्यसिद्धेः साधनवैयर्थ्यमन्तर्व्याप्तौ तदेतद्बहिर्व्याप्तावपि तुल्यं । तस्माद् व्यसनमात्रं बहिर्व्याप्तिग्रहणे विशेषेण सत्त्वे हेतौ केवलं जड़धियामेव नियमेन दृष्टान्तसापेक्षः साधनप्रयोगः परितोषाय जायते । तेषामेवानुग्रहार्थमाचार्य्यो दृष्टान्तमुपादत्ते ।

यत् सत्तत् क्षणिकं यथा घट इति । पटुमतयस्तु नैवं दृष्टान्तमपेक्षन्ते ।

"तस्माद्दृष्टान्तरोक्तेभ्यो घटं दृष्टान्तमब्रवीत् ।
तथा मानेष्ववैयर्थ्यादन्तर्व्याप्तावपीष्यताम् ॥

इत्यन्तरश्लोकः ॥

कथमिदानीं अनुमेये सत्त्वमेव सपक्ष एव सत्त्वमसपक्षे वासत्त्वमेव निश्चितमिति हेतोस्त्रैरूप्यमवगन्तव्यम् ।

"मतौ सपक्षासपक्षौ साध्यधर्मयुतायुतौ ।
सत्त्वासत्त्वे तत्र हेतोस्ते ग्राह्ये यत्र तत्र वा ॥"

साध्यधर्मयुक्तः सर्व्वः सामान्येन सपक्षः, अतद्युक्तश्चासपक्ष इति । तस्मिन् सपक्ष एव सत्त्वमसपक्षे चासत्त्वमेव यथाक्रममन्वयव्यतिरेकौ तौ पुनर्यत्र तत्र वा धर्म्मिणि ग्रहीतव्यौ यत्र शक्यौ ग्रहीतुम् ।

तदिह सत्त्वस्य सर्व्वतोऽक्षणिकाद्व्यावृत्तौ बाधकबलात् सिद्धायां यत् सत्तत् क्षणिकमेवेति अन्वयः साध्यधर्म्मिण्यवगृह्यते । तत्र दृष्टस्य हेतोर्व्याप्तिग्रहणात् धर्म्म्यन्तरासम्भवात् । सम्भवेऽपि तदनुसरणवैयर्थ्यात् । यद्येवमसाधारणो नाम कथमनैकान्तिक उक्तः ॥

असाधारणतां हेतुदोषम्मूढव्यपेक्षया ॥
अब्रवीदग्रहाद्व्याप्ति(प्ते)र्नैवं सर्व्वोपसंहृतौ ॥

उक्तमेतज्जडधियो धर्म्म्यन्तर एव व्याप्तिग्रहणं प्रतिपन्नाः । तदभिमानापेक्षयाऽसाधारणमनैकान्तिकमाह श्रावणत्वं दृष्टान्ताभावात् । साध्यधर्म्मिणि च व्याप्ते रनिष्टेरगृहीतायां व्याप्तौ सन्दिग्धोभयतयाऽनिश्चयकरत्वात् । अथवा असाधारणतैव श्रावणत्वस्य मूढाभिमानोपकल्पिता । दृष्टैव हि शब्दव्यक्तिधर्म्मिणी विवादाधिकरणात् । अन्यथा धर्म्म्यसिद्धिप्रसङ्गाच्च । दृष्टादृष्टशब्दव्यक्तिसाधारणञ्च श्रावणत्वं हेतुः । धूमसामान्यवत् । ततः सर्व्वोपसंहारवत्याः व्याप्तेः सम्भवात् सत्त्वादिवददृष्टमेव साधनं श्रावणत्वाख्यं । क्रमयौगपद्यानुपलम्भ एव चात्र बाधकं प्रमाणं । श्रोत्रज्ञानजनकत्वमेव हि श्रावणत्वं । तस्मान्मूढव्यपेक्षयाऽसाधारणत्वात । असाधारणस्य सर्व्वोपसंहारायोगात् । साध्य-

धर्म्मिणि व्याप्तिप्रतीतावेव साध्यप्रतीतेः साधनवैफल्यं स्यादेव। तन्माभूद्वैफल्यमिति नैव व्याप्तिर्ग्रहीतव्या। तस्यामगृहीतायां सन्दिग्धोभयतया स्यादनैकान्तिकत्वं। सर्व्वोपसंहारेण तु व्याप्तिग्रहणे यथोक्तन्यायेन साधनवैफल्याभावात्। अदुष्टं सत्त्वादि साधनमेवेति वेदितव्यम्। तदेवमुभयथा मूढजनापेक्षयाऽसाधारणमनैकान्तिकमुक्तम्।

समानञ्चैतद्वहिर्व्याप्तिवादिनामपि यदि हि मूढमतापेक्षा न स्यात् स्यादेव श्रावणत्वमदुष्टो हेतुः। सत्वादिवन्नियतशब्देषु हि विवादे शब्दान्तरं स्यात्।

दृष्टान्तः सर्व्वशब्देषु विगतौ बाधकं प्रमाणं प्रवर्त्तमानं अदृष्टान्तमपि तच्चैकं दृष्टान्तयतीति कथम साधारणमनैकान्तिकं वेति। ० ।

अन्तर्व्याप्तिसमर्थनं समाप्तमिति ॥ ० ॥

कृतिरियं रत्नाकरशान्तिपादानामिति ॥ ० ॥

---